[TRIV]ANDRUM SANSKRIT SERIES.

NO. XX.



महाकविश्रीभासप्रणीतम्

अविमारकम् ।

THE

# AVIMÂRAKA

OF

BHÂSA

EDITED WITH NOTES

BY

T. [G]ANAPATI SÂSTRÎ

[Cura]tor of the Department for the publication of Sanskrit manuscripts.

TRIVANDRUM.

Bhasa's Works:—No. 4.

[PUBLISH]ED UNDER THE AUTHORITY OF THE GOVERNMENT OF
[HI]S HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:
PRINTED AT THE TRAVANCORE GOVERNMENT PRE[SS]

1912.

TRIVANDRUM SANSKRIT SERIES.

NO. XX.

THE

# AVIMÂRAKA

OF

# BHÂSA






EDITED WITH NOTES

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

Bhasa's Works:—No. 4.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1912.

अनन्तशयनसंस्कृतग्रन्थावलिः.

ग्रन्थाङ्कः २०.

# अविमारकं

महाकविश्रीभासप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितं

लघुटिप्पण्या च संयोजितम् ।

भासनाटकचक्रे चतुर्थम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोळम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१२.

# PREFACE.

This play is styled 'Avimâraka' since it deals with 'Avimâraka' the prince of Sauvirakas. His concealed residence in the city of king Kuntibhoja with his parents in the form of a *Swapâka* (low-caste) owing to the curse of a sage; the rescue, by him, of Kurangî the daughter of Kuntibhoja his uncle from a fanatic elephant ; the consequent mutual love that springs between them ; his living in secret with her in the palace of Kuntibhoja; then their separation; then his determined effort to lose his life fatigued of the idea of meeting her in future; his secretly coming in contact with her again with the help of the magic ring given by a Vidyâdhara ; his final association, at the end of the period of curse, with his parents, uncle and others who have, by this time, learnt everything from Nârada ; these constitute the plot pictured in this play. The poetic merit of ओजस् is here imbedded with that of माधुर्य and प्रसाद at suitable occasions.

About the close of the sixth Act three persons 'Avimâraka' as bridegroom, Kurangî and Bhûtika are introduced. But nothing is mentioned of Kurangi and Bhûtika as regards their performance in the stage: Bhûtika's remaining inactive may be explained on the ground that he is only a servant: But as regards Kurangi who associates with the hero Avimâraka' at the time, her concomitance, at least, in his salutations to the elders and his receiving their benedictions must be mentioned : Hence we are led to infer that such a sentence describing the action of the heroine must have been left in our manuscript (marked क) unnoticed by the scribe ; Nor are we able to fill up the gap with the assistance of the other manuscript ख, which is incomplete*, belonging to Mr. Subrahmanya Moottathu of Haripad.

Trivandrum. T. GAṆAPATI SÂSTRÎ.

---

* ख. ends with "सुदर्शना—अणन्तरं अय्याए वञ्चिदाए चळदी विअ मे हिअअम्"
(See text page 106)

# निवेदना ।

इदं नाटकम् '**अविमारकम्**' इति व्यवहृतम्, **अविमारकं** नाम सौवीरराजकुमारमधिकृत्य प्रवृत्तत्वात् । तस्य पितृसहितस्य ऋषिशापाच्चण्डालरूपेण **कुन्तिभोज**नगरे प्रच्छन्नवासः, तेन स्वमातुल**कुन्तिभोज**पुत्र्याः **कुरङ्ग्या** मत्तगजाद् रक्षणं, ततस्तयोरन्योन्यानुरागः, तस्य **कुन्तिभोज**गृहे तया सह प्रच्छन्नः संप्रयोगः, ततस्तद्वियोगः, तस्य तत्पुनःसमागमप्रत्याशाविरहाज्जीवितत्यागसंरम्भः, विद्याधरदत्ताङ्गुलीयकमहिम्ना पुनस्तया प्रच्छन्नसंप्रयोगः, अथ शापावसाने **नारद**द्वारेण विदितवृत्तान्तैरात्मपितृमातुलादिभिः समागम इत्येतावदस्मिन् रूपके कथावस्तु । अत्र माधुर्यप्रसादाविव यथाविषयमोजोगुणोऽपि बहुलमादृतः ।

अस्य षष्ठाङ्कान्ते 'ततः प्रविशति वरवेषेणा**विमारकः कुरङ्गी भूतिकश्च**' इति त्रयः प्रवेशिताः । तत्र **कुरङ्गीभूतिक**योर्न काश्चिद् व्यापारो दर्शितः । कामं **भूतिक**स्य भृत्यत्वादस्त्वव्यापारः, **कुरङ्ग्या**स्तु नायिकाया नायकपार्श्वमजहत्यास्तेनानुष्ठितेषु गुरुजनवन्दनेषु तदाशीर्वादपरिग्रहेषु च साहचर्यमात्रमपि वावश्यं वक्तव्यम् । अतो मन्ये, तथाविधस्य नायिकाव्यापारस्य प्रतिपादकं वाक्यं लेखकप्रमादात् क. संज्ञेऽस्मन्मातृकाग्रन्थे गलितम् । न च मातृकान्तरात् **सुब्रह्मण्यमूत्तु**महाशयोपकृतात् ख. संज्ञादसमग्राद्† उपलब्धुं पारितम् ।

अनन्तशयनम्. त. **गणपतिशास्त्री**.

---

† "**सुदर्शना**—अणन्तरं अय्याए वड्ढिदाए चळदी विअ मे हिअअम् । " (पृ. १०६) इत्येतदवधिकमेव ख. संज्ञम् ।

# पात्राणि ।

---

पुरुषाः —

राजा = कथानायिकायाः कुरङ्ग्याः पिता कुन्तिभोजनामा ।
कौञ्जायनः }
भूतिकः } = कुन्तिभोजस्यामात्यौ ।
भटः = कुन्तिभोजस्य प्रतिहारो जयसेननामा ।
अविमारकः = कथानायकः ।
विदूषकः = अविमारकस्य वयस्यः संतुष्टनामा ।
सौवीरराजः = अविमारकस्य पिता ।
नारदः = देवर्षिः ।
विद्याधरः = अविमारकस्याङ्गुलीयकप्रदाता ।

स्त्रियः —

देवी = कुन्तिभोजस्य महिषी ।
कुरङ्गी = कथानायिका कुन्तिभोजदुहिता ।
सुदर्शना = अविमारकस्य जननी काशिराजमहिषी ।
प्रतिहारी = कुन्तिभोजस्य द्वारपालिका ।
चेटी = कुरङ्ग्याः किङ्करी चन्द्रिकाख्या ।
धात्री = कुरङ्ग्या उपमाता जयदा नाम ।
नलिनिका }
मागधिका } = कुरङ्ग्याः परिजनः ।
विलासिनी }
वसुमित्रा }
हरिणिका } = देव्याश्चेट्यौ ।
सौदामनी = विद्याधरस्य प्रियतमा ।

---

॥ श्रीः ॥

श्रीगणेशाय नमः।

महाकविश्रीभासप्रणीतम्

# अविमारकम् ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः—**

उत्क्षिप्तां सानुकम्पं सलिलनिधिजलादेकदंष्ट्राग्ररूढा-
माक्रान्तामाजिमध्ये निहतदितिसुतामेकपादावधूताम् ।
सम्भुक्तां प्रीतिपूर्वं स्वभुजवशगतामेकचक्राभिगुप्तां
श्रीमान् नारायणस्ते प्रदिशतु वसुधामुच्छ्रितैकातपत्राम् ॥ १ ॥

(नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावत् ।

(प्रविश्य)

**नटी—**(क) अय्य! इअह्मि ।

**सूत्रधारः—**आर्ये! तव वदनजनितकौतूहलेन स्मितेन निवेदित इवान्तर्गतो भावः। ननु किञ्चिद् वक्तुकामासि ।

**नटी—**(ख) को एत्थ विह्मओ अय्यो भावञ्ज्ञो[१] त्ति ।

---

(क) आर्य! इयमस्मि ।

(ख) कोऽत्र विस्मय आर्यो भावज्ञ इति ।

---

१. 'ज्ञो' ख. पाठः.

**सूत्रधारः**— तेन हि स्वैरमभिधीयताम् ।

**नटी**— (क) इच्छेमि अय्येण सह उय्याणं गन्तुं । अत्थि मे तहिं इत्थिआकरणीअं णिअमकय्यं ।

(नेपथ्ये)

भूतिक! त्वमप्युद्यानं गच्छ कुरङ्गीरक्षणार्थम् । म(द)भावस्थो ह्यञ्जनगिरिः । ‡

**सूत्रधारः**— आर्ये! ननु भवत्या श्रुतम्— उद्यानं गता राजपुत्रीति । तस्मात् सम्प्रति सर्वतः परिगुप्तानि भवन्त्युद्यानानि । प्रतिनिवृत्तायां राजसुतायां स्वैरं गमिष्यावः ।

**नटी**— (ख) जं अय्यो आणवेदि ।

(निष्क्रान्तौ)

स्थापना ।

---

(ततः प्रविशति राजा सपरिवारः)

**राजा**—

इष्टा सखा द्विजवराश्च मयि प्रसन्नाः
प्रज्ञापिता भयरसं समदा नरेन्द्राः ।

---

(क) इच्छाम्यार्येण सहोद्यानं गन्तुम् । अस्ति मे तत्र स्त्रीकरणीयं नियमकार्यम् ।

(ख) यदार्य आज्ञापयति ।

---

‡ अञ्जनगिरिर्नाम गजः ।

एवंविधस्य च न मेऽस्ति मनःप्रहर्षः
कन्यापितुर्हि सततं बहु चिन्तनीयम् ॥ २ ॥

केतुमति! गच्छ देवीमानय।

**प्रतिहारी**—(क) जं भट्टा आणवेदि । (निष्क्रान्ता)

(ततः प्रविशति सपरिवारा देवी)

**देवी**—(ख) जेदु महाराओ ।

**राजा**—देवि! नित्यप्रसन्नमपि ते मुखमद्यातिप्रसन्नमिव । किङ्कृतोऽयं प्रहर्षः ।

**देवी**—(ग) णं महाराअेण कहिदं—कुरङ्गीणिमित्तं दूदो आअदत्ति । ता अइरेण जामादुअं पेक्खामि त्ति ।

**राजा**—तादृशमप्यस्ति । न तु तावत् क्रियते निश्चयः । एह्युपविश ।

**देवी**—(घ) जं महाराओ आणवेदि । (उपविशति)

**राजा**—देवि! विवाहा नाम बहुशः परीक्ष्य कर्तव्या भवन्ति । कुतः,

जामातृसम्पत्तिमचिन्तयित्वा
पित्रा तु दत्ता स्वमनोभिलाषात् ।

---

(क) यद् भर्ताज्ञापयति ।

(ख) जयतु महाराजः ।

(ग) ननु महाराजेन कथितं—कुरङ्गीनिमित्तं दूत आगत इति । तदचिरेण जामातरं प्रेक्ष इति ।

(घ) यद् महाराज आज्ञापयति ।

कुलद्वयं हन्ति मदे[1]न नारी
कूलद्वयं क्षुब्धजला नदीव ॥ ३ ॥

अये शब्द इवे[2] । बहुभिः कारणैर्भवितव्यम् । अयं हि,

बहुत्वाद् दूरसंस्थोऽपि समीप इव वर्तते ।
सत्सु हेतुसहस्रेषु कुरङ्ग्यां शङ्कते मतिः ॥ ४ ॥

**देवी**—(क) हं उय्याणं गआ मे दुहिआ ।

**राजा**—कोऽत्र ।

(प्रविश्य)

**भटः**—जयतु महाराजः । एष आर्यकौञ्जायनो निवेदयितुमागतः ।

**राजा**—शीघ्रं प्रवेश्यताम् ।

**भटः**—यदाज्ञापयति महाराजः । (निष्क्रान्तः)

(ततः प्रविशति कौञ्जायनः)

**कौञ्जायनः**— (सनिर्वेदम्) भोः! कष्टममात्यत्वं नाम । कुतः,

प्रसिद्धौ कार्याणां प्रवदति जनः पार्थिवबलं
विपत्तौ विस्पष्टं सचिवमतिदोषं जनयति ।
अमात्या इत्युक्ताः श्रुतिसुखमुदारं नृपतिभिः
सुसूक्ष्मं दण्ड्यन्ते मतिबलविदग्धाः[3] कुपुरुषाः ॥ ५ ॥

---

(क) हम् उद्यानं गता मे दुहिता ।

---

१. 'ते' क. पाठः. २. 'व । अ' क. पाठः. ३. 'ग्धा पुरुषता' ख. पाठः.

जयसेन ! कस्मिन् प्रदेशे वर्तते स्वामी । किं ब्रवीषि — उपस्थानगृह इति । अतस्त्वशङ्कनीयेयं भूमिः । (परिक्रम्य ससम्भ्रमम्) प्रसीदतु प्रसीदतु स्वामी ।

राजा — अलमलं सम्भ्रमेण । स्वैरमुपविश्य कथ्यतां वृत्तान्तः ।

कौञ्जायनः — शृणोतु स्वामी । ननु स्वामिनाहमुक्तः — स्वामिदारिकया सह गच्छोद्यानम् इति ।

राजा — एवमुक्तम् । पुनः किम् ।

कौञ्जायनः — ततो गत्वोद्यानं यथासुखमाक्रीड्य निवर्तमानायां राजसुतायां दासीदासहसितकथितश्रवणबृंहितमदस्रवन्मदजलार्द्रदुर्दिनाननो निहतपतितसादिपुरुषः क्षितिरजोवगुण्ठिताव्यक्तभीममूर्तिर्मूर्तिमानिव पवनो दृष्टादृष्टलघुप्रचारः स्वामिसचिवानां वक्तव्यं जनयितुकाम इवैकपुरुषविशेषं प्रकाशयितुमिच्छन्निव मदान्धस्तं देशमभ्युपगतो हस्ती ।

राजा — तिष्ठतु विस्तरः । ननु कुशलिनी कुरङ्गी ।

कौञ्जायनः — कथमकुशलिनी भवति विद्यमानेषु स्वामिभाग्येषु ।

राजा — दिष्ट्या । यथेष्टमिदानीं ब्रूहि ।

कौञ्जायनः — ततः प्रद्रुतेषु प्राकृतजनेषु हाहाकारमात्रप्रतीकारासु स्त्रीषु समाश्रितनिहतेषु सुपुरुषेषु उद्यानगतानां सर्वोपकरणानां परीक्षणाय मुहूर्तव्याक्षिप्ते मयि च नीतिगुप्ते सहसैव स्वामिदारिकाया यानमेव प्राप्तः स हस्ती ।

**देवी** — (क) हं इदो वरं किण्णुखु भविस्सदि ।

**राजा**[1] — अथ केन सनाथीकृता कुरङ्गी ।

**कौञ्जायनः** — अथ कश्चिद् दर्शनी — (इत्यर्धोक्ते तिष्ठति)

**राजा** — यथेष्टमिदानीं ब्रूहि । निष्परिहारा व्यापदः ।

**कौञ्जायनः** — अथ कश्चिद् दर्शनीयोऽप्यविस्मितस्तरुणोऽप्यनहङ्कारः शूरोऽपि दाक्षिण्यवान् सुकुमारोऽपि बलवान् स्वामिदारिकायां हस्तिनाभिभूयमानायां तत्कालदुर्लभमभयं प्रदाय निर्विशङ्कः समासादितवांस्तं द्विपवरम् ।

**राजा** — अनृणः स कारुण्यस्य । ततस्ततः ।

**कौञ्जायनः** — ततस्तेन सललितसरभसकरतलताडनप्ररुष्टः सहसैव स्वामिदारिकां विहाय [2]तं हन्तुकामः प्रतिनिवृत्तः स व्यालः* ।

**देवी** — (ख) कुसळो होदु ।

**राजा** — ततस्ततः ।

---

(क) हम् इतः परं किन्नुखलु भविष्यति ।
(ख) कुशलं भवतु ।

---

१. 'जा — थी' क. पाठः. २. 'तमेव ह' ख. पाठः.

---

* व्यालो दुष्टगजः ।

**कौञ्जायनः**—अथ तदनन्तरमभ्यागतेन भूतिकेन मया च पुनर्यानमारोप्य¹ द्रुतमानीय कन्यान्तःपुरमेव प्रवेशिता स्वामिदारिका ।

**राजा**—अहो महानयं प्रमादः । अथ भूतिकः किमर्थं नाभ्यागतः ।

**कौञ्जायनः**—उक्तोऽहं भूतिकेन – गत्वेमं वृत्तान्तं स्वामिने कथय । अहं तस्य पुरुषस्य प्रवृत्तिमन्वयं च ज्ञात्वा शीघ्रमागमिष्यामीति ।

**राजा**—तेन हि सर्वं परीक्ष्यागमिष्यति भूतिकः । कौञ्जायन ! कतरकुलसमुद्भूतः स परव्यसनसहायः ।

**कौञ्जायनः**—स्वामिन् ! इह विसंवादयत्यात्मानमन्त्यजोऽहमिति ।

**देवी**—(क) महाराअ ! अकुळीणो कहं एव्वं साणुक्कोसो भवे ।

**राजा**—किन्नुखलु भवेदेतत् ।

(ततः प्रविशति भूतिकः)

**भूतिकः**—(सविस्मयम्) अहो प्रच्छन्नरत्नता पृथिव्याः । अस्य तावत् पुरुषस्य निर्व्याजेन विक्रमेण मन्दीभूता इव मन-

---

(क) महाराज ! अकुलीनः कथमेवं सानुक्रोशो भवेत् ।

---

१. 'प्य क' क. पाठः.

स्विनां विक्रमबुद्धयः । एकस्तु मे संशयः, किमर्थमात्मानमन्वयं चच्छादयति । अथवा कः शक्तः सूर्यं हस्तेनाच्छादयितुम् । इह हि,

छन्ना भवन्ति भुवि सत्पुरुषाः कथञ्चित्
स्वैः कारणैर्गुरुजनैश्च नियम्यमानाः ।
भूयः परव्यसनमेत्य विमोक्तुकामा§
विस्मृत्य पूर्वनियमं विवृता भवन्ति ॥ ६ ॥

जयसेन! कस्मिन् प्रदेशे वर्तते स्वामी । किं ब्रवीषि — उपस्थानगृह इति । अतस्त्वशङ्कनीयेयं भूमिः । यावत् प्रविशामि । (प्रविश्य) अये अयं महाराजो देव्या सहास्ते । (उपगम्य) जयतु महाराजः ।

**राजा** — देवि! त्वमभ्यन्तरं प्रविश्याश्वासय कुरङ्गीम् अहमप्यनुपदमागमिष्यामि ।

**देवी** — (क) जं महाराओ आणवेदि । (निष्क्रान्ता)

**राजा** — को वृत्तान्तस्तस्य परार्थमनवेक्षितशरीरस्य ।

**भूतिकः** — शृणोतु स्वामी । स मुहूर्तमनादरमत्वरितं स-

(क) यन्महाराज आज्ञापयति ।

§ विमोक्तुं ण्यर्थान्तर्भावाद् विमोचयितुमित्यर्थः, कामो येषां ते विमोक्तुकामाः ।

ललितं[1] प्रियवयस्येनेव तेन हस्तिना प्रक्रीड्य निवर्तनानुवर्तनगतिविशेषैर्विमोह्य लज्जित इव तेन कर्मणा[2] महाजनप्रशंसामसहमानः समवनताशिरस्कः स्वैरं[3] स्वमेवावासं गतः ।

**राजा** — भोः ! प्रीतोऽस्मि । अयं हि मे द्वितीयो लाभः ।

**भूतिकः** — अथ तद(न?)न्तरमुपलभ्य हस्तिनीभिस्तं गजवरं सङ्ग्राह्येमां गजशालां प्रवेश्याहं तस्य पुरुषस्य प्रवृत्तिमन्वयं च ज्ञातुमन्यापदेशेन गतवानस्मि ।

**राजा** — अथ किं कृतो निश्चयः । श्रुतमस्माभिरन्त्यज इति ।

**भूतिकः** — शान्तं शान्तं पापम् । नायं तादृशः । केनापि कारणेनात्मानमन्वयं चच्छादयति ।

**राजा** — अथ किं भवता परीक्षितम् ।

**भूतिकः** — किमत्र परीक्षितव्यम् ।

दैवं रूपं ब्रह्मजं तस्य वाक्यं
क्षात्त्रं तेजः सौकुमार्यं बलं च ।
यद्येवं स्यात् सत्यमस्यान्त्यजत्वं
व्यर्थोऽस्माकं शास्त्रमार्गेषु खेदः ॥ ७ ॥

**राजा** — किमस्त्यस्य कलत्रम् ।

**भूतिकः** — सर्वमास्ति । कलत्रं स्वयमनिर्विष्टः ।

---

१. 'तमनवेक्षितः प्रि' ख. पाठः. २. 'णा ज' ख. पाठः. ३. 'स्वयमे' ख. पाठः.

**राजा**—यद्यपि स्त्रीदर्शनं[1] परिहृतं, किमर्थं तस्य पिता न परीक्षितः ।

**भूतिकः**—दृष्टस्तत्रभवान् सत्पुत्रसम्पन्नः । स हि,

व्यायामस्थिरविपुलोच्छ्रितायतांसो
ज्याघातप्रचितकिणोल्बणप्रकोष्ठः ।
प्रच्छन्नोऽप्यनुकृतिलक्ष्यराजभावो
मेघान्तर्गतरविवत् प्रभानुमेयः ॥ ८ ॥

**राजा**—अलमेतावता प्रसङ्गेन । पुनरप्येषा परीक्षा क्रियताम् ।

**भूतिकः**—यदाज्ञापयति स्वामी ।

**राजा**—अथेदानीं काशिराजदूतं प्रति किं कर्तव्यम् ।

**भूतिकः**—स्वामिन् ! दूतशतान्यागतान्यागमिष्यन्ति च ।

न तत्र कर्तव्यमिहास्ति लोके
कन्यापितृत्वं बहुवन्दनीयम् ।
सर्वे नरेन्द्रा हि नरेन्द्रकन्यां
मल्लाः पताकामिव तर्कयन्ति ॥ ९ ॥

**राजा**—कोऽभिप्रायः ।

**भूतिकः**—सर्वत्र दाक्षिण्यं न कर्तव्यम् । गुणबाहुल्यं तदात्वमायतिं चावेक्ष्य *त्वरतां दीर्घसूत्रतां च परित्यज्य देशका-

---

१. 'स्त्रीजनं' क. पाठः.

---

* त्वरतां त्वरमाणत्वम् ।

लाविरोधेन साधयितव्यं कार्यमित्यर्थः ।

**राजा**— युक्तमभिहितं भूतिकेन । कौञ्जायन ! किमर्थं तूष्णीं भूतः । ‡

**कौञ्जायनः**— स्वामिन् ! बहुष्वपि क्षत्रियेषु पूर्वसम्बन्धविशेषौ सौवीरराजकाशिराजौ स्वामिनो भगिनीपतित्वे तुल्यौ अस्मत्सम्बन्धयोग्याविति स्वामिना चिन्तितौ । तत्र पूर्वमेव सौवीरराजेन पुत्रस्य कारणाद् दूतः प्रेषितः । स चास्माभिरतिबाला कन्येत्यपदेशमुक्त्वा सुपूजितो विसर्जितः । इदानीं तु काशिराजेन पुत्रस्य कारणाद् दूतः प्रेषितः । तत्र बलाबलचिन्तायां स्वामी प्रमाणम् ।

**राजा**— सम्यगुक्तं कौञ्जायनेन । भूतिक ! सर्वराजमण्डलमपोह्य द्वयोः स्थापितयोः कं प्रति विशेषः ।

**भूतिकः**— न भृत्यदूषणीया राजानः, स्वामिनो हि स्वाम्यमात्यानाम् ।

**राजा**— अलमुपचारेण । ब्रूहि को निश्चयः ।

**भूतिकः**[1]— इदानीं तु न प्रत्याख्यातव्यम्[2] । स्वामिन् ! सौवीरराजकाशिराजौ स्वामिनो भगिनीपतित्वे तुल्यौ । अथ देव्या भ्रातेति सौवीरेन्द्रो गुणाधिकः ।

---

१. 'कौञ्जायनः -- इ' क. पाठः.   २. 'व्यम् । भूतिकः — स्वा' क. पाठः.

---

‡ त्वमिति शेषः ।

**राजा**[1] —— न खलु भवानस्मत्सङ्कल्पानभिवादकः ।

**भूतिकः** —— उभयथानुगृहीतोऽस्मि ।

**राजा** —— भोः ! किन्नुखलु सौवीरेन्द्रेण पुनर्न दूतसम्पातः क्रियते ।

**भूतिकः** —— तत्रास्ति मे कश्चित् सन्देहः[2] । सुष्ठु परीक्ष्य वक्ष्यामीति नोक्तवानस्मि ।

**राजा** —— [3]ननु कुशली तत्रभवान् ।

**भूतिकः** —— वदन्ति चारपुरुषाः ——

न दृश्यते तत्रभवान् सपुत्रः
कार्याण्यमात्याः किल वर्तयन्ति ।
न विद्यते कारणमत्र किञ्चि-
न्न लभ्यते राजकुलप्रवेशः ॥ १० ॥

**राजा**[4] —— भोः ! किन्नुखलु भवेदेतत् ।

कामाहतः कुमतिभिः सचिवैर्गृहीतो
रोगातुरः स्वजनराग[5]मवेक्षते वा ।
[6]शप्तो द्विजैर्व्रतमुपेत्य करोति शान्तिं
को वा भवेन्नरपतेर्गृहरोधहेतुः ॥ ११ ॥

शीघ्रं परीक्ष्यतामेष वृत्तान्तः ।

**भूतिकः** —— यदाज्ञापयति स्वामी ।

---

१. 'जा— अथ न' क. पाठः. २. 'शः' क. पाठः. ३. 'न कु' ख. पाठः. ४. जा— [ि]' क. पाठः. ५. 'जमपेक्ष' क. पाठः. ६. 'ब्दो' क. पाठः.

**राजा** — कौञ्जायन ! किमिदानीं[1] काशिराजदूतं प्रति कर्तव्यम् ।

**कौञ्जायनः** — एवं गते काशिराज[2]दूतः पूज[3]यितव्यः । बहुमुखा[4] विवाहा यथेष्टं साध्यन्ते ।

**राजा** — अहो कार्यमेवापेक्षते बुद्धिरमात्यानां, न स्नेहम् ।

(नेपथ्ये)

जयतु[5] स्वामी, जयतु महाराजः । दश नाळिकाः पूर्णाः ।

**भूतिकः** — स्वामिन् ! शेषमभ्यन्तरे चिन्तयिष्याम[6]ः । अतिक्रामति स्नानवेला । स्वामिदारिका चाश्वासयितव्या । महादेवी च चिरं प्रतीक्षते । महाजनोऽप्यस्मिन्नुपद्रवे स्वामिनं द्रष्टुमिच्छति ।

**राजा** — अहो †महद्भारो राज्यं नाम । कुतः,

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्ध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥

( निष्क्रान्ताः सर्वे)

**प्रथमोऽङ्कः ।**

---

१. 'नीं क' क. पाठः. २. 'जः पू' क. पाठः. ३. 'र' ख. पाठः. ४. 'खा हि वि' ख. पाठः. ५. 'तु महाराजः, जयतु स्वामी । द' ख. पाठः. ६. 'वः' क. पाठः.

† महतां भारः, महद्भिर्भरणीयं राज्यमित्यर्थः ।

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति विदूषकः)

**विदूषकः**—(क) भो! ण जाणन्ति अवत्थाविसेसं इस्सरपुत्ता णाम । अदो तत्तभवं अविमारओ इसिसावेण कुळपरिब्भंसं अन्तअकुळप्पवासं अत्तणो विण्णाणं गुरुजणं च अचिन्तअन्तो जदा हत्थिसम्भमदिअसे कुन्तिभोअदुहिआ कुरङ्गी दिट्ठा, तदप्पहुदि अण्णादिसो विअ संवुत्तो । ही ही किं बहुणा, मए वि सह गोट्ठिं णेच्छदि, सव्वआळं चिन्तअन्तो अहिरमदि । सच्चो खु लोअप्पवादो 'सङ्कआरिणो अणत्थ'त्ति । को एत्थ सम्बन्धो । सा राअदारिआ सअं अन्तज त्ति (पुच्छदि?) । अहं पि दाव बह्मणपरिवादं परिहरन्तो बह्मणकुळेसु परिब्भमिअ पच्छण्णो तत्तहोदो आवासं एव्व गच्छामि ।

---

(क) भोः! न जानन्त्यवस्थाविशेषमीश्वरपुत्रा नाम । अतस्तत्रभवान् अविमारकः ऋषिशापेन कुलपरिभ्रंशमन्त्यजकुलप्रवासमात्मनो विज्ञानं गुरुजनं चाचिन्तयन् यदा हस्तिसम्भ्रमदिवसे कुन्तिभोजदुहिता कुरङ्गी दृष्टा, तदाप्रभृत्यन्यादृश इव संवृत्तः । ही ही किं बहुना, मयापि सह गोष्ठीं नेच्छति, सर्वकालं चिन्तयन्नभिरमते । सत्यः खलु लोकप्रवादः 'सङ्कचारिणोऽनर्था' इति । कोऽत्र सम्बन्धः । सा राजदारिका स्वयमन्त्यज इति पृच्छति । अहमपि तावद् ब्राह्मणपरिवादं परिहरन् ब्राह्मणकुलेषु परिभ्रम्य प्रच्छन्नस्तत्रभवत आवासमेव गच्छामि ।

(ततः प्रविशति चेटी)

**चेटी** — (क) एदस्सिं अवत्थापरिब्भट्ठे राअउळे अबहुक-य्यदाए णअरं पेक्खिदुं णिग्गदह्मि । (परिक्रम्यावलोक्य) अयि एसो अय्यसन्तुट्ठो गच्छइ । होदु, एदेण सह हसन्ती मुहुत्तअं णिव्वेदं विणोदेमि । (उपसृत्योर्ध्वमवलोक्य) हळा कोमुदिए! किं ळद्धो बह्मणो । किं भणासि — ण ळभामि त्ति ।

**विदूषकः** — (ख) चन्दिए! किं एदं ।

**चेटी** — (ग) अय्यं[1]! कञ्चि बह्मणं अण्णेसामि ।

**विदूषकः** — (घ) बह्मणेण किं कय्यं ।

**चेटी** — (ङ) किमण्णं, भोअणत्थं णिमन्तेदुं ।

**विदूषकः** — (च) भोदि! अहं को, समणओ ।

**चेटी** — (छ) तुवं किळ अवेदिओ ।

---

(क) एतस्मिन्नवस्थापरिभ्रष्टे राजकुलेऽबहुकार्यतया नगरं प्रेक्षितुं निर्गतास्मि । अयि एष आर्यसन्तुष्टो गच्छति । भवतु, एतेन सह हसन्ती मुहूर्तकं निर्वेदं विनोदयामि । हला! कौमुदिके! किं लब्धो ब्राह्मणः । किं भणसि — न लभ इति ।

(ख) चन्द्रिके! किमेतत् ।

(ग) आर्य! कञ्चिद् ब्राह्मणमन्वेषे ।

(घ) ब्राह्मणेन किं कार्यम् ।

(ङ) किमन्यद्, भोजनार्थं निमन्त्रयितुम् ।

(च) भवति! अहं कः, श्रमणकः ।

(छ) त्वं किलावैदिकः ।

---

१. 'य्य ब' ख. पाठः.

**विदूषकः**—(क) किस्स अहं अवेदिओ । सुणाहि दाव । अत्थि रामाअणं णाम णट्टसत्थं । तस्सिं पञ्च सुळोआ असम्पुण्णे संवच्छरे मए पठिदा ।

**चेटी**—(ख) जाणामि जाणामि । अय्यस्स कुळोइदो[1] ईदिसो मेधाविभावो ।

**विदूषकः**—(ग) ण केवळं सुळोआ एव, तेसं अत्थो वि (उ[2] ? मु)णिओ । अण्णं च । अवरो विसेसो, बह्मणो दुळ्ळहो अक्खरञ्ञो अत्थञ्ञो अ ।

**चेटी**—(घ) तेण हि भणाहि किं णाम एदं अक्खरं । (नाममुद्रिकां दर्शयति)

**विदूषकः**—(आत्मगतम्) (ङ) अजाणमाणो किं भणिस्सं । (विचार्य) एवं[3] दाव भणिस्सं[4] । (प्रकाशम्) भोदि ! एदं अक्खरं मम पुत्थए णत्थि ।

---

(क) कस्मादहमवैदिकः । शृणु तावत् । अस्ति रामायणं नाम नाट्यशास्त्रम् । तस्मिन् पञ्च श्लोका असम्पूर्णे संवत्सरे मया पठिताः ।

(ख) जानामि जानामि । आर्यस्य कुलोचित ईदृशो मेधाविभावः ।

(ग) न केवलं श्लोका एव, तेषामर्थोऽपि ज्ञातः । अन्यच्च । अपरो विशेषः, ब्राह्मणो दुर्लभोऽक्षरज्ञोऽर्थज्ञश्च ।

(घ) तेन हि भण किं नामैतदक्षरम् ।

(ङ) अजानानः किं भणिष्यामि । एवं तावद् भणिष्यामि । भवति ! एतदक्षरं मम पुस्तके नास्ति ।

---

१. 'कुदो' ख. पाठः. २. 'उणिओदो । अ' क. पाठः. ३. 'भोदु दिट्ठं । (प्र' ख. पाठः. ४. 'स्सं । भो' क. पाठः.

**चेटी** — (क) जदि ण जाणासि, अदक्खिणं भुञ्जेहि ।

**विदूषकः** — (ख) भोदु भोदु ।

**चेटी** — (ग) पेक्खामि दाव अय्यस्स अङ्गुलीअअं ।

**विदूषकः** — (घ) पेक्ख पेक्ख ममकेरअं दंसणीअं ।

**चेटी** — (गृहीत्वा) (ङ) एसो भट्टिदारओ इदो एव्व आअच्छदि ।

**विदूषकः** — (परावृत्यावलोक्य) (च) कहिं कहिं तत्तभवं ।

**चेटी** — (छ) विळोभिदो मुद्धबह्मणो । इमं जणसमूहं पविसिअ चउप्पहमग्गे वञ्चिअ गमिस्सं । (निष्क्रान्ता)

**विदूषकः** — (सर्वतो विलोक्य) (ज) चन्दिए! चन्दिए! कहिं कहिं चन्दिआ। हा वञ्चिदो ह्मि। *गण्डभेददासीए सीळं जाणन्तो वि अत्तणो भोअणविस्सम्भेण छळिदो ह्मि। (परिक्रम्य) भोअणं वि

---

(क) यदि न जानासि, अदक्षिणं भुङ्क्ष्व ।

(ख) भवतु भवतु ।

(ग) पश्यामि तावदार्यस्याङ्गुलीयकम् ।

(घ) पश्य पश्य मदीयं दर्शनीयम् ।

(ङ) एष भर्तृदारक इत एवागच्छति ।

(च) कुत्र कुत्र तत्रभवान् ।

(छ) विलोभितो मुग्धब्राह्मणः । इमं जनसमूहं प्रविश्य चतुष्पथमार्गे वञ्चयित्वा गमिष्यामि ।

(ज) चन्द्रिके! चन्द्रिके! कुत्र कुत्र चन्द्रिका । हा वञ्चितोऽस्मि । गण्डभेददास्याः शीलं जानन्नप्यात्मनो भोजनविस्रम्भेणच्छलितोऽस्मि । भोजनमप्यलीकं चिन्त-

---

* गण्डभेददास्या ग्रन्थिभेददास्याश्चौरदास्या इत्यर्थः ।

अळिअं चिन्तेमि । (अग्रतो विलोक्य) हन्त एसा धावइ । चिट्ठ चिट्ठ अधम्मिट्ठदासि ! चिट्ठ । किं धावइ एव्व । जाव अहं वि धावामि। (धावति) मम पादा सिविणे हत्थिणा आसादिअमाणस्स विअ तहिं तहिं एव्व पडन्ति । हन्त कुम्भदासीए वुत्तन्तं तत्तहोदो णिवेदइस्सं ।

(निष्क्रान्तः)

**प्रवेशकः ।**

---

(ततः प्रविशत्युपविष्टोऽविमारकः)

**अविमारकः —**

अद्यापि हस्तिकरशीकरशीतलाङ्गीं
बालां भयाकुलविलोल‡विषादनेत्राम् ।
स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
जातिस्मरः प्रथमजातिमिव स्मरामि ॥ १ ॥

अहो बलमनङ्गस्य । कुतः,

दृष्टिस्तदाप्रभृति नेच्छति रूपमन्यद्
बुद्धिः प्रहृष्यति विषीदति च स्मरन्ती ।

---

यामि । हन्तैषा धावति । तिष्ठ तिष्ठ अधर्मिष्ठदासि ! तिष्ठ । किं धावत्येव । यावदहमपि धावामि । मम पादौ स्वप्ने हस्तिनासाद्यमानस्येव तत्र तत्रैव पततः । हन्त कुम्भदास्या वृत्तान्तं तत्रभवते निवेदयिष्यामि ।

---

‡ विषादशब्दो विषादिपरः । 'विषादि' इति वा पाठः ।

पाण्डुत्वमेति वदनं तनुतां शरीरं
शोकं व्रजामि दिवसेषु निशासु मोहम् ॥ २ ॥

अथवा अयुक्तमधृतित्वं पुरुषाणाम् । सङ्कल्पमानो हि विजृम्भते मदनः । तस्मादहमिदानीं न सङ्कल्पयामि । (स्मृत्वा) अहो तस्या रूपसम्पद्, रूपानुरूपं यौवनं, यौवनसदृशं सौकुमार्यम् । अत्र हि,

प्रतिच्छन्दं धात्रा *युवतिवपुषां किन्नु रचितं
गता वा स्त्रीरूपं कथमपि च ताराधिपरुचिः ।
विहाय श्रीः कृष्णं जलशयनसुप्तं कृतभया
धृतान्यस्त्रीरूपं क्षितिपतिगृहे वा निवसति ॥ ३ ॥

कथमहं पुनरारब्धश्चिन्तयितुम् । किमिदानीं करिष्ये । मनश्च तावदस्मदिच्छया न प्रवर्तते । इह हि,

प्रतिषिद्धं प्रयत्नेन क्षणमात्रं न ‡वीक्षते ।
चिराभ्यस्तपथं याति शास्त्रं दुर्गुणितं यथा ॥ ४ ॥

अथवा न शक्यं मनो जेतुम् । चिन्तयिष्याम्येनाम् । अहो सर्वेषां स्त्रीगुणानामेकत्र समवायः । (चिन्ताभिभूत उपविशति)

(ततः प्रविशति धात्री नलिनिका च)

**धात्री**—(सवितर्कम्) (क)अहो सङ्कडदा कय्यस्स । जइ एवं

---

(क) अहो सङ्कटता कार्यस्य । यद्येवं क्रियते, राजकुलं दूषितं भवति । यदि न

---

* युवतिवपुषां स्त्रीरूपाणाम् । ‡ न वीक्षते प्रतिषेधानुसारेण न तिष्ठतीत्यर्थः ।

करीअदि, राअउळं दूसिअं होइ । जदि ण करीअदि, अवस्सं सा विवज्जइ । मए अणेएहि उवाएहि विआरिदं च । मम वि सा अज्ज वि पच्छादेदि । अहव किं ताए पच्छादिदं । सा तदप्पहुदि सुमणावण्णअं णेच्छदि, आहारं णाभिळसदि, ण रमदि गोट्ठीजणेण, दिग्घं[1] णिस्ससदि, असम्बद्धं कहेदि, कहिदं ण जाणादि, गूढं हसदि, विवित्ते रोदिदि, रोअं अवदिसदि, तणुआ होदि, पण्डुभावं गच्छदि। एकं पि तहिं अच्छरिअं । एवंविधेहि अवत्थाविसेसेहिं अत्तणो ळज्जाए भएण कुळमाणेण बाळभावेण अ एकस्सा वि किञ्चि ण मन्तेदि ।

**नलिनिका**—(क) किस्स ण मन्तेदि । मम सव्वं कहेदि ।

**धात्री**—(ख) हळा! जाणामि दे अभिप्पाअं, अवत्थं जाणिअ सव्वहा इमं एदेण जोजेहि त्ति।

---

क्रियतेऽवश्यं सा विपद्यते । मयानेकैरुपायैर्विचारितं च । ममापि साद्यापि प्रच्छादयति। अथवा किं तया प्रच्छादितम् । सा तदाप्रभृति सुमनावर्णकं नेच्छति, आहारं नाभिलषति, न रमते गोष्ठीजनेन, दीर्घं निःश्वसिति, असम्बद्धं कथयति, कथितं न जानाति, गूढं हसति, विविक्ते रोदिति, रोगमपदिशति, तन्वी भवति, पाण्डुभावं गच्छति । एकमपि तत्राश्चर्यम् । एवंविधैरवस्थाविशेषैरात्मनो लज्जया भयेन कुलमानेन बालभावेन च एकस्या अपि किञ्चिन्न मन्त्रयते ।

(क) कस्मान्न मन्त्रयते । मम सर्वं कथयति ।

(ख) हला ! जानामि तेऽभिप्रायम् , अवस्थां ज्ञात्वा सर्वथेमामेतेन योजयेति ।

---

१. 'अआरणं णि' ख. पाठः.

**नलिनिका** —(क) किंणुखु ईदिसो तादिसेहि गुणविसेसेहि अकुळीणो भवे।

**धात्री** —(ख) तहिं च सन्देहो। सुदं च मए भट्टिणीए समीवे अमच्चेहि किळ भणिदं—ण सो तादिसो। दुक्खुळजो त्ति अत्ताणं केण त्रि कारणेण पच्छादेदि त्ति।

**नलिनिका** —(ग) कोणुखु भवे।

**धात्री** —(घ) जदि सो सन्देहो णत्थि, को अण्णो अदिरित्तगुणो जामादुओ भवे।

(नेपथ्ये)

यदि च विभवरूपज्ञानसत्त्वादयः स्यु-
र्न तु कुलविकलानां वर्तते वृत्तशुद्धिः।
ध्रुवमिह कुलमस्य श्रोष्यसि प्राप्तकाले
त्यज कुलगतशङ्कां साध्यतां स्वन्तमेतत् ॥ ५ ॥

**धात्री** —(ङ) हळा! केण खु भणिदं।

---

(क) किन्नुखल्वीदृशस्तादृशैर्गुणविशेषैरकुलीनो भवेत्।

(ख) तत्र च सन्देहः। श्रुतं च मया भट्टिन्याः समीपेऽमात्यैः किल भणितं—न स तादृशः। दुष्कुलज इति आत्मानं केनापि कारणेन प्रच्छादयतीति।

(ग) कोनुखलु भवेत्।

(घ) यदि स सन्देहो नास्ति, कोऽन्योऽतिरिक्तगुणो जामाता भवेत्।

(ङ) हला! केन खलु भणितम्।

**नलिनिका**—(क) एत्थ को[1] वि ण दिस्सदि ।

**धात्री**—(ख) पहिट्ठरोमकूवं मे सरीरं । असंसअं दव्वेण भणिदं । अहं पुण जाणामि ण एसो केवलो माणुसत्ति ।

**नलिनिका**—(ग) गदो तस्स कुलसन्देहो । अह्माणं वअणं करेदि ण करेदि त्ति चिन्तेमि । (विचिन्त्य) धण्णो खु सो जणो[2] इमं एवं उम्मादेदि । किं बहुणा, सअं कामदेवो वि भट्टिदारिआए रूवं पेक्खिअ किलिस्सिदि । तेण सो वि किलिस्सिदि त्ति तक्केमि ।

**धात्री**—(घ) हळा ! एसो तस्स आवासो, जं (त)दा हत्थिसम्भमदिअसे[3] कोदूहळेण आअदह्म ।

**नलिनिका**—(ङ) हळा ! अहो दस्सणीअं किदोवहारं च दुवारमुहं[4] । हळा ! एहि पविसामो ।

---

(क) अत्र कोऽपि न दृश्यते ।

(ख) प्रहृष्टरोमकूपं मे शरीरम् । असंशयं दैवेन भणितम् । अहं पुनर्जानामि नैष केवलो मानुष इति ।

(ग) गतस्तस्य कुलसन्देहः । अस्माकं वचनं करोति न करोतीति चिन्तयामि । धन्यः खलु स जनमिममेवमुन्मादयति । किं बहुना, स्वयं कामदेवोऽपि भर्तृदारिकाया रूपं प्रेक्ष्य क्लिश्यते । तेन सोऽपि क्लिश्यत इति तर्कयामि ।

(घ) हला ! एष तस्यावासः, यं तदा हस्तिसम्भ्रमदिवसे कौतूहलेनागते स्वः ।

(ङ) हला ! अहो दर्शनीयं कृतोपहारं च द्वारमुखम् । हला ! एहि प्रविशावः ।

---

१. 'कोच्चि ण' ख. पाठः. २. 'जणं इ' क. पाठः. ३. 'से आअदह्म कोदूहळेण । नलिनिका' ख. पाठः. ४. 'हं । धात्री' क. पाठः.

**धात्री** — (क) हळा ! कहिं भट्टिदारओ । किं भणासि — चउस्साळे वत्तदि त्ति । (परिक्रम्यावलोक्य) अअं अह्माणं भट्टिदारओ एको एव किं वि चिन्तअन्तो चिट्ठइ ।

**नलिनिका** — (ख) हळा ! णं पविसामो ।

**धात्री** — (ग) एवं करेह्म । (प्रविश्य) सुहं अय्यस्स ।

**अविमारकः** — अहो तस्या रूपसम्पत् ।

**धात्री** — (साकुलम्) (घ) किण्णुहु भवे । सुहं अय्यस्स ।

**अविमारकः** —

उरः स्तनतटालसं जघनभारखिन्ना तनुः

**धात्री** — (ङ) अम्मो विप्पळवदि ।

**अविमारकः** —

मुखं नयनवल्लभं प्रकृतिताम्रबिम्बाधरम् ।

**धात्री** — (च) धण्णो खु सो जणो इमं एवं उम्मादेदि ।

---

(क) हला ! कुत्र भर्तृदारकः । किं भणसि — चतुःशाले वर्तत इति । अयमस्माकं भर्तृदारक एक एव किमपि चिन्तयंस्तिष्ठति ।

(ख) हला ! ननु प्रविशावः ।

(ग) एवं कुर्वः । सुखमार्यस्य ।

(घ) किन्नुखलु भवेत् । सुखमार्यस्य ।

(ङ) अम्मो विप्रलपति ।

(च) धन्यः खलु स जन इममेवमुन्मादयति ।

**अविमारकः**—

भयेऽपि यदि तादृशं नयनपात्रपेयं वपुः

**धात्री** —(क) सुत्थिदं कय्यं ।

**अविमारकः** —

कथन्नु सुरतान्तरप्रचुरविभ्रमं तद् भवेत् ॥ ६ ॥

**धात्री** —(ख) सा एव इमं उम्मादेदि ।

**नलिनिका** —(ग) सुट्ठु भणिदं—एसो वि किळिस्सिदि त्ति ।

**धात्री** —(घ) सुट्ठु विञ्ञादं तुए। सुहं अय्यस्स।

**अविमारकः** —(विलोक्य सव्रीलम्) स्वागतं भवतीभ्याम् ।

**उभे** —(ङ) अवि सुहं ।

**अविमारकः**—भविष्यति वां दर्शनेन ।

**धात्री**—(च) अय्य ! किं चिन्तीअदि ।

**अविमारकः** —भवति ! शास्त्रं चिन्त्यते ।

---

(क) सुस्थितं कार्यम् ।

(ख) सैवेममुन्मादयति ।

(ग) सुष्ठु भणितम्—एषोऽपि क्लिश्यत इति ।

(घ) सुष्ठु विज्ञातं त्वया । सुखमार्यस्य ।

(ङ) अपि सुखम् ।

(च) आर्य ! किं चिन्त्यते ।

**धात्री** —(क) किं णाम एदं रमणीअं सत्थं विवित्थे चिन्तीअदि ।

**अविमारकः**— भवति! योगशास्त्रं चिन्त्यते ।

**धात्री** —(सस्मितम्) (ख) पडिग्गहिदं मङ्गळवअणं जोअसत्थं एव्व होदु ।

**अविमारकः** —(आत्मगतम्) कोनुखलु वाक्यार्थः । अन्यदप्यभिलाषवशादन्यथा सङ्कल्पयामि । (प्रकाशम्) किमभिप्रेतं भवत्याः ।

**धात्री** —(ग) जोअं इच्छन्तीओ आअदह्म । अणुमदो अय्येण जोओ त्ति णं णिट्ठिदं कय्यं अह्माअं राअउळे विवित्ते आवासे[1] । तहिं पि को वि जणो अहिअदरं जोअं चिन्तअन्तो अच्छदि । तेण सह तहिं एव अय्येण सुट्ठु जोअविहाणं चिन्तीअदु त्ति ।

**अविमारकः** —कथमद्यापि सावशेषाणि मे भाग्यानि । (आसनादुत्थाय) भवति! पुनर्दत्ता इव मे प्राणाः । कुतः,

तस्या भयाकुलितदृष्टिविषं मनोज्ञं
सौम्यप्रकारमतितीक्ष्णमवेक्ष्य वक्त्रम् ।

---

(क) किं नामैतद् रमणीयं शास्त्रं विविक्ते चिन्त्यते ।

(ख) प्रतिगृहीतं मङ्गलवचनम् । योगशास्त्रमेव भवतु ।

(ग) योगमिच्छन्त्यावागते स्वः । अनुमत आर्येण योग इति ननु निष्ठितं कार्यमस्माकं राजकुले विविक्त आवासे । तत्रापि कोऽपि जनोऽधिकतरं योगं चिन्तयन्नस्ति । तेन सह तत्रैवार्येण सुष्ठु योगविधानं चिन्त्यतामिति ।

---

१. 'अवआसे' ख. पाठः,

उन्मादमभ्युपगतोऽस्मि चिरं भवत्यो-[1]
वाक्यामृतेन पुनरद्य कृतः ससंज्ञः ॥ ७ ॥

**धात्री**—(क) दिट्ठिआ अय्येण परिपाळिदो अअं जणो। अळमदिप्पसङ्गेण। अज्ज एव पविसिदव्वं कण्णाउरं। अमच्चो अय्यभूदिओ कण्णाउररक्खओ कासिराअदूदेण सह अह्माअं महाराएण पूइदो पत्थिदो अ।

**अविमारकः**——बाढम्। प्रथमः कल्पः। भवति! कस्ताव-दौषधमुपलभ्य मन्दीभवत्यातुरः।

**धात्री**—(ख) पवेसमत्तं एव्व दुल्ळहं। सक्कं अब्भन्तरे चिरं वसिदुं।

**अविमारकः**——प्रविष्ट एवाहं चिन्तयितव्यः। क्रियतामन-र्गलविशालाः प्रासादमालाः।

**धात्री**—(ग) एवं करेह्म। सव्वं अब्भन्तरकरणीअं संपादेह्म। अप्पमत्तो एव पविसदु अय्यो।

---

(क) दिष्ट्यार्येण परिपालितोऽयं जनः। अलमतिप्रसङ्गेन। अद्यैव प्रवेष्टव्यं कन्यापुरम्। अमात्य आर्यभूतिकः कन्यापुररक्षकः काशिराजदूतेन सहास्माकं महाराजेन पूजितः प्रस्थितश्च।

(ख) प्रवेशमात्रमेव दुर्लभम्। शक्यमभ्यन्तरे चिरं वस्तुम्।

(ग) एवं कुर्वः। सर्वमभ्यन्तरकरणीयं संपादयावः। अप्रमत्त एव प्रविशत्वार्यः।

---

१. 'पुनर्भवत्या' क. पाठः.

**अविमारकः**—भवति! सकृदभिधीयतां राजकुलस्य विधानम् ।

**धात्री**—(क) एवं विअ ।

**अविमारकः**—हन्त भोः!

श्रुत्वा तु राज्ञो गृहसंविधानं
प्रविष्टमात्मानमवैति बुद्धिः ।
न पौरुषं वै परदूषणीयं
न चेद् विसंवादमुपैति दैवम् ॥ ८ ॥

(विचिन्त्य) भवति! कोऽस्माकमस्मिन् कार्ये प्रत्ययः ।

**उभे**—(ख) *अअं पच्चओ । जेदु भट्टिदारओ ।

**अविमारकः**—हन्त गम्यतां सम्प्रति । प्रतीक्ष्यतामर्धरात्रम् ।

**उभे**—(ग) जं भट्टिदारओ आणवेदि । (निष्क्रान्ते)

(ततः प्रविशति विदूषकः)

**विदूषकः**—(घ) अहो णअरस्स सोहा संपदि । अत्थं

---

(क) एवमिव ।

(ख) अयं प्रत्ययः । जयतु भर्तृदारकः ।

(ग) यद् भर्तृदारक आज्ञापयति ।

(घ) अहो नगरस्य शोभा सम्प्रति । अस्तमासादितो भगवान् सूर्यो दृश्यते दधि-

---

* एतद्वाक्योत्तरं किञ्चिद् वाक्यमपेक्षितं प्रतिभाति ।

आसादिदो भअवं सुय्यो दीसइ दहिपिण्डपण्डरेसु पासादेसु अग्गापणाळिन्देसु पसारि[1]अगुळमहुर(स)सङ्गदो विअ । गणिआजणो णाअरिअजणो अ अण्णोण्णविसेसमण्डिदा अत्ताणं दंसइदुकामा तेसु तेसु पासादेसु[2] सविब्भमं सञ्चरन्ति[3] । अहं तु तादिसाणि पेक्खिअ उम्मादिअमाणस्स तत्तहोदो रत्तिसहाओ होमि त्ति णअरादो णिग्गदो ह्मि । सो वि दाव अह्माअं अधण्णदाए केण वि अणत्थसञ्चिन्तणेण अण्णादिसो विअ संवुत्तो। एदं तत्तहोदो आवासगिहं । अज्ज णअरापणाळिन्दे सुणामि तत्तहोदो गिहादो णिग्गदा राअदारिआ(ए) धत्ती सही(अ)त्ति । किंणुखु एत्थ कय्यं । अहव हत्थिहत्थचञ्चळाणि पुरुसभग्गाणि होन्ति । अहव गच्छदु अणत्थो अह्माअं । अवत्थासदिसं राअउळं पविसामि । (प्रविश्य) ही ही एसो अत्तभवं कामुअजणवण्णएण अणुळित्तो विअ पण्डुभावेण इदो एव आअच्छदि । अहव सव्वं अळङ्कारो होदि सुरूवाणं । (उपेत्य) जेदु भवं ।

---

पिण्डपाण्डरेषु प्रासादेष्वग्रापणालिन्देषु प्रसारितगुलमधुर(स)सङ्गत इव । गणिकाजनो नागरिकजनश्चान्योन्यविशेषमण्डितावात्मानं दर्शयितुकामौ तेषु तेषु प्रासादेषु सविभ्रमं संचरतः । अहं तु तादृशानि प्रेक्ष्योन्माद्यतस्तत्रभवतो रात्रिसहायो भवामीति नगरान्निर्गतोऽस्मि । सोऽपि तावदस्माकमधन्यतया केनाप्यनर्थसंचिन्तनेनान्यादृश इव संवृत्तः । एतत् तत्रभवत आवासगृहम् । अद्य नगरापणालिन्दे शृणोमि तत्रभवतो गृहान्निर्गता राजदारिका(या) धात्री सखी (चे)ति । किंनुखल्वत्र कार्यम् । अथवा हस्तिहस्तचञ्चलानि पुरुषभाग्यानि भवन्ति । अथवा गच्छत्वनर्थोऽस्माकम् । अवस्थासदृशं राजकुलं प्रविशामि । ही ही एषोऽत्रभवान् कामुकजनवर्णकेनानुलिप्त इव पाण्डुभावेनेत एवागच्छति । अथवा सर्वमलङ्कारो भवति सुरूपाणाम् । जयतु भवान् ।

---

१. 'सतरे अ' [illegible] : २. 'सु अग्गापणाळिन्देसु सवि' ख. पाठः. ३. 'ति' ख. पाठः.

**अविमारकः**——वयस्य ! अतिविलम्बितमिव भवता नगरे ।

**विदूषकः**——(क) तुमं दाव आमन्तणविप्पळद्धो विअ बह्मणो अहोरत्तं चिन्तेसि । अहं पि दाव दिअसे णअरं परिब्भमिअ अळद्धभोआ पाअडगणिआ विअ रत्तिं पस्सदो सइदुं आअच्छामि ।

**अविमारकः**——सखे ! प्रियं ते कथयिष्यामि ।

**विदूषकः**——(ख) किं समत्तो अह्माअं इसिसावो ।

**अविमारकः**——मूर्ख ! अवश्यं भवितव्येऽर्थे कः प्रहर्षः ।

**विदूषकः**——(ग) किं पुण अण्णं ।

**अविमारकः**——किं न दृष्टा कुरङ्ग्या धात्री नलिनिका च ।

**विदूषकः**——(घ) आम भो ! दिट्ठाओ तत्तहोदीओ । किं आणीदं ।

**अविमारकः**——अस्मच्छोकौषधमानीतम् ।

**विदूषकः**——(ङ) पेक्खामि दाव ।

**अविमारकः**——काले द्रक्ष्यसि । अद्य तावच्छ्रूयताम् ।

---

(क) त्वं तावदामन्त्रणविप्रलब्ध इव ब्राह्मणोऽहोरात्रं चिन्तयासि । अहमपि तावद् दिवसे नगरं परिभ्रम्यालब्धभोगा प्राकृतगणिकेव रात्रौ पार्श्वतः शयितुमागच्छामि ।

(ख) किं समाप्तोऽस्माकमृषिशापः ।

(ग) किं पुनरन्यत् ।

(घ) आम भोः ! दृष्टे तत्रभवत्यौ । किमानीतम् ।

(ङ) पश्यामि तावत् ।

**विदूषकः**—(क) भणादु भणादु भवं ।

**अविमारकः**—किं बहुना । तत्रभवती ब्रवीति अद्यैव प्रवेष्टव्यं[1] कन्यापुरमिति ।

**विदूषकः**—(विहस्य) (ख) केण खु उवाएण अब्भन्तरं पविसिअ जीवग्गहणं पत्तुकामोऽसि । अमच्चा णाम विसमसीळा कुन्तिभोअस्स ।

**अविमारकः**—कथं भवतापि शङ्कनीयम् । पश्य,

भग्ना मयैकेन पराः ससैन्या
अद्यापि गन्धेन न संश्रयन्ते* ।
किं मानुषैः सोऽप्यसुरेश्वरो मे
हतो भुजाभ्यामविरूपधारी ॥ ९ ॥

**विदूषकः**—(ग) जाणामि जाणामि भवदो अमाणुसाणि कम्माणि । सव्वहा सङ्कणीओ रत्तिच्छण्णो परगिहप्पवेसो ।

---

(क) भणतु भणतु भवान् ।

(ख) केन खलूपायेनाभ्यन्तरं प्रविश्य जीवग्रहणं प्राप्तुकामोऽसि । अमात्या नाम विषमशीलाः कुन्तिभोजस्य ।

(ग) जानामि जानामि भवतोऽमानुषाणि कर्माणि । सर्वथा शङ्कनीयो रात्रिच्छन्नः परगृहप्रवेशः ।

---

१. 'व्यमद्यैव प्रवेष्टव्यं क' ख. पाठः.

---

* न संश्रयन्ते न संयुज्यन्ते । योगानुकूलव्यापारवृत्तेर्धातोरिह योगमात्रे वृत्तिविवक्षणात् ।

**अविमारकः**—एष समासः। सर्वथा प्रवेष्टव्यं कुन्तिभोजस्य कन्यापुरम्। तदनुमन्तुमर्हति महाब्राह्मणः।

**विदूषकः**—(क) कहं मं उज्झिअ गच्छसि। अहं भवन्तं सव्वकाळं ण मुञ्चामि। अक्कोसन्तो वि एक्को इच्छिदव्वो।

**अविमारकः**—न जानाति भवान् शास्त्रमार्गम्।

एकः परगृहं गच्छेद् द्वितीयेन तु मन्त्रयेत्।
बहुभिः समरं कुर्यादित्ययं शास्त्रनिर्णयः ॥ १० ॥

तस्मादेकेनैव मया प्रवेष्टव्यं कुन्तिभोजस्य कन्यापुरम्। न ते वयं शङ्कनीयाः[1]। पश्यतु भवान्,

मितगुणमिह कुन्तिभोजसैन्यं
नृपभवनं विभवैः सुखं प्रवेष्टुम्।
वयमपि च भुजायुधप्रधानाः
किमिह सखे! भवतापि शङ्कनीयाः ॥ ११ ॥

**विदूषकः**—(ख) जइ एवं किदो णिच्चओ, संपदि णअरं पविसामो। तहिं मम अत्थि मित्तो। तस्स आवासे काळं पडिवाळह्म।

---

(क) कथं मामुज्झित्वा गच्छसि। अहं भवन्तं सर्वकालं न मुञ्चामि। आक्रोशन्नप्येक एष्टव्यः।

(ख) यद्येवं कृतो निश्चयः, संप्रति नगरं प्रविशावः। तत्र ममास्ति मित्रम्। तस्यावासे कालं प्रतिपालयावः।

---

१. 'याः। विदू' ख. पाठः.

**अविमारकः**—सम्यग् भवानाह । साम्प्रतमभ्यन्तरं प्रविश्य कृताह्निको महाराजेनाभ्यनुज्ञातो वासगृहे शयनसंविधानं प्रविश्याज्ञातो नगरं प्रविश्य भवतो मित्रगृहे कालं प्रतिपालयामि ।

(प्रविश्य)

**चेटी**—(क) जेदु भट्टिदारओ । आवुत्तं ह्णाणोदअं ।

**अविमारकः**—अयमयमागच्छामि । गच्छाग्रतः ।

**चेटी**—(ख) जं भट्टिदारओ आणवेदि । (निष्क्रान्ता)

**अविमारकः**—वयस्य! अस्तमितो भगवान् दिवाकरः । सम्प्रति हि—

पूर्वा तु काष्ठा तिमिरानुलिप्ता
सन्ध्यारुणा भाति च पश्चिमाशा ।
द्विधा विभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम्† ॥ १२ ॥

**विदूषकः**—(ग) सुट्ठु भवं भणादि । अदिक्कन्दो दिअसो । आरूढो पओसो ।

---

(क) जयतु भर्तृदारकः । आवृत्तं स्नानोदकम् ।

(ख) यद् भर्तृदारक आज्ञापयति ।

(ग) सुष्ठु भवान् भणाति । अतिक्रान्तो दिवसः । आरूढः प्रदोषः ।

---

† ईश्वरभागस्य द्रुतकनकवर्णत्वप्रसिद्धेररुणत्वोपपत्तिः ।

**अविमारकः**——अहो विचित्रस्वभावता जगतः । कुतः,

व्यामृष्टसूर्यतिलको विततोडुमालो
 नष्टातपो मृदुमनोहरशीतवातः ।
संलीनकामुकजनः प्रविकीर्ण(शू?चो)रो
 वेषान्तरं रचयतीव मनुष्यलोकः ॥ १३ ॥

(निष्क्रान्तौ)

द्वितीयोऽङ्कः ।

—— ——

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति कुरङ्गी चेट्यौ च)

**कुरङ्गी** — (क) हळा! किं तेण भणिअं ।

**चेटी** — (ख) भट्टिदारिए! केण ।

**कुरङ्गी** — (स्वगतम्) (ग) हं भिन्दामि खु मन्दभाआ । (प्रकाशम्) कण्णेउरचेडेण[1]‡ ।

**मागधिका** — (घ) दिट्ठो मए कण्णेउरचेडो । भणिदं च । ण किञ्चि आह ।

**कुरङ्गी** — (ङ) हन्त भट्टिणीए णिवेदेमि — कण्णेउरचेडो मम सुअपञ्जरं ण करेदि त्ति ।

**मागधिका** — (च) णं णिट्ठिदो सुअपञ्जरो भट्टिदारिआए ।

---

(क) हला! किं तेन भणितम् ।

(ख) भर्तृदारिके! केन ।

(ग) हं भिनद्मि खलु मन्दभागा । कन्यापुरचेटेन ।

(घ) दृष्टो मया कन्यापुरचेटः । भणितं च । न किञ्चिदाह ।

(ङ) हन्त भट्टिन्यै निवेदयामि — कन्यापुरचेटो मम शुकपञ्जरं न करोतीति ।

(च) ननु निष्ठितः शुकपञ्जरो भर्तृदारिकायाः ।

---

१. 'कण्णऊर' ख. पाठः.

---

‡ 'कण्णाउरचेडेण' इति स्यात् ।

**कुरङ्गी** — (क) वाचाडे! किं अण्णो वि अत्थि।

**मागधिका** — (ख) भोदव्वं।

**कुरङ्गी** — (ग) हळा! का वेळा।

**मागधिका** — (घ) ओगाहो पओसो।

**कुरङ्गी** — (ङ) तेण हि पासादं आळुहामो।

**मागधिका** — (च) विळासिणि! अग्गदो जाहि। विरएहि सअणासणाणि।

**विलासिनी** — (छ) सुत्ता खु तुवं। को काळो विरइदाणि सअणासणाणि।

**मागधिका** — (ज) हळा! जाणामि दे अळसत्तणं। दिवस-रइदाणि भणासि रइदाणि त्ति।

---

(क) वाचाटे! किमन्योऽप्यस्ति।

(ख) भवितव्यम्।

(ग) हला! का वेला।

(घ) अवगाढः प्रदोषः।

(ङ) तेन हि प्रासादमारोहामः।

(च) विलासिनि! अग्रतो याहि। विरचय शयनासनानि।

(छ) सुप्ता खलु त्वम्। कः कालो विरचितानि शयनासनानि।

(ज) हला! जानामि तेऽलसत्वम्। दिवसरचितानि भणसि रचितानीति।

---

१. 'डए! अ' ख. पाठः.

**विलासिनी**—(क) हळा! मा एव्वं भणाहि । भट्टिदारिअं अन्तरेण अण्णादिसाणि होन्ति ।

**मागधिका**—(ख) हळा! गदुअ जाणामि ।

(सर्वाः परिक्रामन्ति)

**मागधिका**—(ग) एसो पासादो ।

**कुरङ्गी**—(घ) अग्गदो आहि । (आरोहणं नाटयति)

**मागधिका**—(ङ) साहु विळासिणि! साहु । अत्तणो णामसदिसं किदं । एदस्सिं सिळादळे रइदं सअणं ।

**विलासिनी**—(च) अब्भन्तरमण्डवे खु रइदं सअणं । मागधिए! पेक्ख पेक्ख मे अळसत्तणं ।

**मागधिका**—(छ) अदिपण्डिदा खु संवुत्ता । एवं पण्डितचेडवुत्तं भत्तारं ळभेहि ।

**कुरङ्गी**—(ज) हळा! इमस्सिं सिळादळे मुहुत्तअं उवविसामि ।

---

(क) हला! मैवं भण । भर्तृदारिकामन्तरेणान्यादृशानि भवन्ति ।

(ख) हला! गत्वा जानामि ।

(ग) एष प्रासादः ।

(घ) अग्रतो याहि ।

(ङ) साधु विलासिनि! साधु । आत्मनो नामसदृशं कृतम् । एतस्मिन् शिलातले रचितं शयनम् ।

(च) अभ्यन्तरमण्डपे खलु रचितं शयनम् । मागधिके! पश्य पश्य मेऽलसत्वम् ।

(छ) अतिपण्डिता खलु संवृत्ता । एवं पण्डितचेटवृत्तं भर्तारं लभस्व ।

(ज) हला! अस्मिन् शिलातले मुहूर्तकमुपविशामि ।

**मागधिका**—(क) जं भट्टिदारिआए रुइदं । होदु ।

(सर्वा उपविशन्ति)

**मागधिका**—(ख) भट्टिदारिए ! कहेमि वक्खाणं ।

**कुरङ्गी**—(ग) हळा ! जाणामि दे असम्बद्धप्पळावं ।

**मागधिका**[1]—(घ) भट्टिदारिए ! अभिणवा खु कहा ।

**कुरङ्गी**—(ङ) याचेमि, मा णिब्बन्धिअ, मुहूत्तअं सआमि ।

**विलासिनी**—(च) सुहं सेइदु[2] भट्टिदारिआ । मे कहेहि

**कुरङ्गी**—(आत्मगतम्) (छ) किंणुखु भवे ।

**मागधिका**—(ज) हळा ! सुणाहि भट्टिदारिअं अन्तरेण ।

**कुरङ्गी**—(झ) हं विदिदं रहस्सं । परिब्भट्ठह्मि ।

**विलासिनी**—(ञ) हळा ! कहिं तुए सुदं ।

---

(क) यद् भर्तृदारिकायै रुचितम् । भवतु ।
(ख) भर्तृदारिके ! कथयामि व्याख्यानम् ।
(ग) हला ! जानामि तेऽसंबद्धप्रलापम् ।
(घ) भर्तृदारिके ! अभिनवा खलु कथा ।
(ङ) याचे, मा निर्बध्य, मुहूर्तकं शये ।
(च) सुखं शेतां भर्तृदारिका । मम कथय ।
(छ) किंनुखलु भवेत् ।
(ज) हला ! श्रृणु भर्तृदारिकामन्तरेण ।
(झ) हं विदितं रहस्यम् । परिभ्रष्टास्मि ।
(ञ) हला ! कुत्र त्वया श्रुतम् ।

---

१. 'धि — अ' ख. पाठः. २. 'सेदु' ख. पाठः.

**मागधिका** — (क) भट्टिणीपरिचारिआए वसुमित्ताए कहिदं।

**विलासिनी** — (ख) सअं णाम भट्टिणीए कहिदं होदि।

**मागधिका** — (ग) अत्थि कासिराअपुत्तो जअवम्मा णाम। तस्स दिण्णा भट्टिदारिआ। तस्स अ दूदो आअदो महाराएण पूइदो। पडिग्गहिदं च वण्णिआरं।

**कुरङ्गी** — (आत्मगतम्) (घ) एदं अळिअं। अहं अत्तणो ‡पभामि।

**मागधिका** — (ङ) तहिं किळ भट्टिणीए भणिदं—बाळा खु मे दुहिआ, ण सक्कुणोमि एक्कं पि दिअसं अपेक्खन्ती जीविउं। जदि मे महाराओ पसण्णो, एत्थ एव्व जामादुओ आणीदव्वो त्ति।

**विलासिनी** — (च) तदो तदो।

---

(क) भट्टिनीपरिचारिकया वसुमित्रया कथितम्।

(ख) स्वयं नाम भट्टिन्या कथितं भवति।

(ग) अस्ति काशिराजपुत्रो जयवर्मा नाम। तस्मै दत्ता भर्तृदारिका। तस्य च दूत आगतो महाराजेन पूजितः। प्रतिगृहीतं च वर्णिकारम्।

(घ) एतदलीकम्। अहमात्मनः प्रभवामि।

(ङ) तत्र किल भट्टिन्या भणितं—बाला खलु मे दुहिता, न शक्नोम्येकमपि दिवसमपश्यन्ती जीवितुम्। यदि मे महाराजः प्रसन्नः, अत्रैव जामातानेतव्य इति।

(च) ततस्ततः।

---

‡ 'पभवामि' इति स्यात्।

**मागधिका** — (क) तदो तं[1] पि किळ अणुमदं महाराएण । अज्ज णक्खत्तं सोभणं त्ति तेण अ दूदेण अमच्चो अय्यभूदिओ पत्थिदो[2] ।

**कुरङ्गी** — (स्वगतम्) (ख) हन्त काळन्तरिदं कय्यं ।

**विलासिनी** — (ग) पिअं भट्टिदारिआए रूवजोव्वणं सफळं संवुत्तं त्ति ।

(प्रविश्य)

**नलिनिका** — (घ) भणिदं हि मम मादाए — गच्छ एदं वुत्तन्तं भट्टिदारिआए कहेहि । पिअणिवेदिअमाणाणि पिआणि पिअदराणि होन्ति । अह अ सा वि मं पेक्खन्ती सव्वं विस्सत्थं ण भणादि । अहं पि काले पस्सदो पभवामि त्ति । जाव भट्टिदारिआए पिअं णिवेदेमि । (परिक्रामति)

---

(क) ततस्तदपि किलानुमतं महाराजेन । अद्य नक्षत्रं शोभनमिति तेन च दूतेनामात्य आर्यभूतिकः प्रस्थितः ।

(ख) हन्त कालान्तरितं कार्यम् ।

(ग) प्रियं भर्तृदारिकाया रूपयौवनं सफलं संवृत्तमिति ।

(घ) भणितं हि मम मात्रा — गच्छैतं वृत्तान्तं भर्तृदारिकायै कथय । प्रियनिवेद्यमानानि प्रियाणि प्रियतराणि भवन्ति । अथ च सापि मां पश्यन्ती सर्वं विश्वस्तं न भणति । अहमपि काले पार्श्वतः प्रभवामीति । यावद् भर्तृदारिकायै प्रियं निवेदयामि ।

---

१. 'तं कि' क. पाठः. २. 'ओ अ।' ख. पाठः.

**कुरङ्गी** —— (क) कोणुखु अभूदपुव्वो रोओ चिन्तिअमाणो मं उम्मादेदि । सुमणावण्णअं णेच्छदि । ण तुस्सदि गोट्ठीए । इदं एत्थ दारुणं मणोहरं च । (निःश्वस्य) णळिणिए! किं एदं ।

**मागधिका** —— (ख) भट्टिदारिए! माअधिआ खु अहं ।

**विलासिनी** —— (ग) भट्टिदारिए! विलासिणी खु अहं ।

**नलिनिका** —— (उपगम्य) (घ) भट्टिदारिए! अहं णाळिणिआ । सोवाणसद्देण खु भट्टिदारिआए विञ्ञादं । भट्टिदारिए! भट्टिणी भणादि ।

**कुरङ्गी** —— (ङ) किं त्ति ।

**नलिनिका** —— (कर्णे) (च) एवं विअ ।

**कुरङ्गी** —— (छ) हं हीणं चारित्तं ।

**नलिनिका** —— (ज) णं सम्भावणीओ एसो । णं सो एव सो ।

---

(क) कोनुखल्वभूतपूर्वो रोगश्चिन्त्यमानो मामुन्मादयति । सुमनावर्णकं नेच्छति । न तुष्यति गोष्ठ्या । इदमत्र दारुणं मनोहरं च । नलिनिके! किंमेतत् ।

(ख) भर्तृदारिके! मागधिका खल्वहम् ।

(ग) भर्तृदारिके! विलासिनी खल्वहम् ।

(घ) भर्तदारिके! अहं नलिनिका । सोपानशब्देन खलु भर्तृदारिकया विज्ञातम् । भर्तृदारिके! भट्टिनी भणति ।

(ङ) किमिति ।

(च) एवमिव ।

(छ) हं हीनं चारित्रम् ।

(ज) ननु संभावनीय एषः । ननु स एव सः ।

**कुरङ्गी** — (क) णळिणिएँ[1]! संवाहेहि मं ।

**नलिनिका** — (ख) जं भट्टिदारिआ आणवेदि ।

**विलासिनी** — (ग) णळिणिए! विवाहो कदा भविस्सिदि ।

(नेपथ्ये)

अद्यै[2] ।

**नलिनिका** — चिरं जीवँ[3] ।

(नेपथ्ये)

राजपुरुषाः! अमात्यः प्रस्थित इति कश्चिदमात्यभृत्यः कन्यापुररक्षणार्थं नाभ्यागतः । तद् यथेष्टं भवतु । तावदहं श्वो राज्ञो निवेदयिष्यामि[4] ।

**विलासिनी** — (घ) हळा णळिणिएँ[5]! किं भणिदं ।

**नलिनिका** — (ङ) जदा सो भट्टिदारओ पविसदि, तदा होदि विवाहो ।

---

(क) नलिनिके! संवाहय माम् ।

(ख) यद् भर्तृदारिकाज्ञापयति ।

(ग) नलिनिके ! विवाहः कदा भविष्यति ।

(घ) हला नलिनिके! किं भणितम् ।

(ङ) यदा स भर्तृदारकः प्रविशति, तदा भवति विवाहः ।

---

१. 'ए(+ + + + ? भाट्टिदारिआए') क. पाठः. २. 'द्यैव । न' ख. पाठः. ३. 'व । अ' क. पाठः. ४. 'ष्ये ।' ख. पाठः. ५. 'ए। भट्टिदारिआए किं' ख. पाठः.

**विलासिनी** — (क) अविग्घेण पविसदु ।

**नलिनिका** — (ख) एवं होदु ।

**मागधिका** — (ग) हळा ! एहि चउस्साळे उपविसामो ।

**विलासिनी** — (घ) एवं होदु । गदप्पाओ पओसो । आरूढा जोह्णा ।

**नलिनिका** — (ङ) हळा ! मम वि अत्थरं[1] अत्थरेहि ।

**मागधिका** — (च) अत्थि अवआसो । सेवेहि भट्टिदारिअं, जाव णिद्दं ळभदि ।

**नलिनिका** — (छ) एवं होदु ।

(उभे निष्क्रान्ते)

(ततः प्रविशति खड्गहस्तेश्चोरवेषेण रज्जुहस्तोऽविमारकः)[2]

**अविमारकः** — (सविमर्शम्) भोः ! कष्टं तारुण्यं नाम । कुतः,

रागं विजृम्भयति संश्रयते प्रमादं
दोषान् न चिन्तयति साहसमभ्युपैति ।

---

(क) अविघ्नेन प्रविशतु ।
(ख) एवं भवतु ।
(ग) हला ! एहि चतुःशाले उपविशामः ।
(घ) एवं भवतु । गतप्रायः प्रदोषः । आरूढा ज्योत्स्ना ।
(ङ) हला ! ममाप्यास्तरमास्तृणु ।
(च) अस्त्यवकाशः । सेवस्व भर्तृदारिकां, यावन्निद्रां लभते ।
(छ) एवं भवतु ।

---

१. 'रअं पत्थ' ख. पाठः.  २. 'स्तोऽवि' ख. पाठः.

स्वच्छन्दतो व्रजति नेच्छति नीतिमार्गं
बुद्धिं शुभां सुविदुषामवशीकरोति ॥ १ ॥

कथमात्माधीनेष्वर्थेषु मन्दीभवामि । इह हि,

नगरपरिचितोऽहं रक्षिणो ज्ञातसारा-
स्तिमिरगहनभीमं वर्तते चार्धरात्रम् ।
असिरपि सुसहायो निश्चितश्चान्तरात्मा
किमिह बहुविचारैः को मया दुष्करोऽर्थः ॥ २ ॥

अहो अर्धरात्रस्य प्रतिभयता । सम्प्रति हि,

गर्भस्था इव मोहमभ्युपगताः सर्वाः प्रजा निद्रया
प्रासादाः सुखसुप्तनीरवजना ध्यानं प्रविष्टा इव ।
प्रग्रस्ता इव सञ्चितेन तमसा स्पर्शानुमेया नगा
अन्तर्धानमिवोपयाति सकलं प्रच्छन्नरूपं जगत् ॥ ३ ॥

अद्यैव खलु वर्तते कालरात्रिः ।

तिमिरमिव वहन्ति मार्गनद्यः
पुलिननिभाः प्रतिभान्ति हर्म्यमालाः ।
तमसि दश दिशो निमग्नरूपाः
प्लवतरणीय इवायमन्धकारः ॥ ४ ॥

(परिक्रम्य कर्णं दत्त्वा) अये गान्धर्वध्वनिरिव श्रूयते । कोनुखल्वयं सार्वकालसुखी पुरुषः कान्तया सह गान्धर्वमनुभवति । व्यक्तं स्वयं वीणां वादयति । कुतः,

---

१. 'वीणां स्वयं वा' ख. पाठः.

उच्चं हर्म्यं सन्निरुद्धाश्च जाला-
स्तन्त्रीनादः श्रूयते सानुनादम् ।
बाह्यस्थानं व्यक्तमेवं प्रयोक्तुं
किं सामर्थ्यं स्त्रीकराग्राङ्गुलीनाम् ॥ ५ ॥

गीतं तु पुनः स्त्रियाः । इह हि,

तानस्तु मन्दो विशदप्रवृत्तो
जातश्च नादो मुखनासिकेन ।
स्थूलोऽपि हेतुः करतालनादः
सञ्जायते सद्वलयस्वनेन ॥ ६ ॥

(परिक्रम्यावलोक्य) हहह अयमपरः कः क्रुद्धां कान्तां प्रसादयति । महान् खल्वस्यापराधः, येनेयमस्यां वेलायामपि न प्रसीदति । अथवा प्रसन्ना खल्वियं व्यपदेशमिच्छति ! कुतः,

बाष्पोपरुद्धजडगद्गदजिह्मकण्ठं
काहं तवेत्यसकलं प्रणयाद् वदन्ती ।
सद्भावतः प्रियवशं समुपागतापि
स्त्रीभावतः प्रवदति प्रतिकूलमेव ॥ ७ ॥

कोनुखल्वयं पक्षी भैरवस्वरः । आ उलूकः खल्वयम् । कथं हसितमनेन । उलूकस्वरश्रवणभीतया कान्तया परिष्वक्तः खल्वयं तपस्वी । सदृशं वयसः किं परव्यापार(वीक्ष)णम् । साधयामस्तावत् । (परिक्रम्य) कोनुखल्वयमस्मिन् नगरापणालिन्दे

१. 'ल्वयमस्मिन्' क. पाठः.

सशङ्कितमतिस्निग्धं च सम्भाषते । अस्मत्सब्रह्मचारी खल्वयं तपस्वी ।

सम्पीड्यते परिजनेन शनैर्वदेति
संविग्नवद् भवति भूषणनिस्वनेन ।
सङ्गं वदत्यसुखदं मदनाभिभूतः
सङ्केतमिच्छति च नेच्छति चाभिगन्तुम् ॥ ८ ॥

(परिक्रम्य) अये ज्योत्स्ना । नैषा ज्योत्स्ना, उभयपङ्क्तिगतानां प्रासादानां गवाक्षान्तरगता दीपप्रभैषा । इह खलु प्रयत्नादात्मा रक्षितव्यः । अये अयं[1] तु तस्करः[2] । एष हि,

दृढपरिकरबन्धहृष्टचित्तः
परगृहवादनिविष्टदृष्टिचेष्टः ।
द्रुतगतिरपि दीपिकावलोकी
भवति च पादनिपातनादभीरुः ॥ ९ ॥

हन्त परिहरिष्यास्येनम् । (एकान्ते स्थितः) गतो नृशंसः । वयमपि तावत् प्रतिष्ठामहे । (परिक्रम्य) अये रक्षिणः खल्वेते । किन्नुखल्विदानीं करिष्ये । भवतु दृष्टम् । इमां शृङ्गाटकस्थां विटसभां प्रविशामि । (विलङ्घ्य स्थित्वा)

आरक्षिणां तु विमुखं मितविक्रमाणां
मामभ्युपेत्य हसतीव ममैष खड्गः ।
नैते तु रक्षिपुरुषा मम भारभूता
मत्कार्यसाधनपरोऽहमिह प्रविष्टः ॥ १० ॥

गता रक्षिणः । के रक्षन्ति रक्षितात्मानम् ।

---

१. 'यं त' क. पाठः. २. 'रः, ह' क, पाठः.

अबहुपुरुषपक्षमेत्य शौर्यं
निशि विचरन्ति सरागलोभमोहाः।
इह तु पुरुषकारसारसाक्षी
बहुविषमश्च सुखश्च रात्रिचारः ॥ ११ ॥

एतद् राजकुलम् । अहो स्थिरत्वमुच्छ्रितत्वं प्राकारस्य । इह खलु प्रयुज्यते पुरुषाणां कक्ष्याबन्धः । अथवा प्रविष्ट एवाहं चिन्तयितव्यः, यदि स्थिराः कपिशीर्षकाः । इह स्थित्वा रज्जुं प्रक्षिपामि । नमः प्रजापतये। नमः सर्वसिद्धेभ्यः । प्रसीदन्तु बलि-शम्बरमहाकालाः। विजृम्भतां रात्रिः। वर्धतां निद्रा । अनुमन्यतां पद्मा । लयं गताः सर्वाविघ्ना भवन्तु । हताः परिपन्थिका भवन्तु । जयतु भगवती कार्त्यायनी । (रज्जुं क्षिप्त्वा) हन्त बद्धः कर्कटक-रज्ज्वा §कपिशीर्षकः । अहो भवितव्यस्य प्रभावः । एकेनैव क्षेपेण सुसंसक्तां रज्जुं कार्यसिद्धिमिव पश्यामि । अहो बल-वान् हि भगवान् प्रजापतिः । कुतः,

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
को वा न सिध्यति ममेति करोति कार्यम् ।
यत्नैः शुभैः पुरुषता भवतीह नृणां
दैवं विधानमनुगच्छति कार्यसिद्धिः ॥ १२ ॥

भवतु रज्जुमवलम्ब्यारोहामि । (आरुह्य दृष्ट्वा) अहो राजकुलस्य श्रीः ।

§ काष्ठादिमयः कपिशीर्षप्रतिनिधिः ।

विपुलमपि मितोपमं विभागा-
न्निबिडमिवाभ्युदितं क्रमोच्छ्रयेण ।
नृपभवनमिदं सहर्म्यमालं
जिगमिषतीव नभो वसुन्धरायाः ॥ १३ ॥

इह तु न स्थातव्यम् । अट्टालप्रतोलीन्द्रपथेभ्यः* सर्वविघ्ना भवन्ति । भवतु अनयैव रज्ज्वावतरिष्यामि । (अवतीर्य) क्वनुखल्विदानीं रज्जुं प्रच्छादयामि । (विचिन्त्य) भवतु दृष्टम् । अस्यां हस्तिशालायां पाशं छित्त्वा क्षिपामि । (प्रक्षिपति । परिक्रम्य)

अये तन्त्रीनादो युवतिकलगीतध्वनियुतः

अन्यतो यास्यामि ।

अये गन्धामोदो गजवरमदोद्बोधितपटुः ।

मुहूर्तं स्थित्वा यास्यामि ।

प्रभैषा दीपानामिह तु वितता रक्षिपुरुषाः

का गतिः ।

चिराद् रात्रौ शान्तं सह कमलषण्डैर्नृपगृहम् ॥ १४॥

यास्यामि । एष तयोक्तो मार्गः । इयं मन्दाकिनी । असौ दारुपर्वतकः । इयमुपस्थानसभा । अये अयं कन्यापुरप्रासादः । एष तु काष्ठकर्मबहुलतया समासन्नजालत्वाच्च सुखमारोढुम् । अथवा दुरारोहश्चेत्,

---

* 'इन्द्रमहेभ्य' इति वा पाठो भवेत् । इन्द्रमहशब्दश्च शुनकार्थकः 'इन्द्रमहः पुनः । शुनि द्वे ना तु शक्रस्य महे' इति केशवस्वाम्युक्तेः ।

कान्तासमीपमुपगम्य मनोभिलाषा-
द्धर्म्याधिरोहणमतेर्मम का विशङ्का ।
संसक्तनालगतकण्टकभीतचेता-
स्तृष्णार्दितः क इह पुष्करिणीं जहाति ॥ १५ ॥

भवत्वारोहामि । (आरुह्य) इदं तयोक्तं जालयन्त्रम् । (विघाट्य प्रविश्यावलोक्य च) साधु कुन्तिभोज! साधु । उत्प्रहसित इव भवनेनानेन स्वर्गः । तथाहि,

हंसाः स्वपन्ति मणिरत्नशिलातलेषु
वैदूर्यमौक्तिककृताः सिकताप्रतानाः ।
स्तम्भाः प्रवालविहिताः किमिह प्रलापै-
र्मन्दीभवन्ति मणिदीपहताः प्रदीपाः ॥ १६ ॥

अलं रौद्रवेषेण । (चोरवेषमपनीय कक्ष्याबन्धं विमुञ्चति)

**नलिनिका** — (क) कोणुखु[३] वुत्तन्तो भट्टिदारअस्स । भट्टिदारिआ वि अवत्थादुल्लहं णिद्दं लभदि अज्ज उ मम पिओ आअच्छदि त्ति सुदमत्तेण एव ।

**अविमारकः** — (श्रुत्वा सहसोपसृत्य[४]) भवति! अयं मे वृत्तान्तः ।

**नलिनिका** — (विलोक्य सहर्षम्) (ख) साअदं भट्टिदारअस्स ।

**अविमारकः**[५] — (दृष्ट्वा सानन्दम्) इयमियं सा । यत्र मम,

(क) कोनुखलु वृत्तान्तो भर्तृदारकस्य । भर्तृदारिकाप्यवस्थादुर्लभां निद्रां लभत अद्य तु मम प्रिय आगच्छतीति श्रुतमात्रेणैव ।

(ख) स्वागतं भर्तृदारकस्य ।

१. 'धा' क. पाठः. २. 'क्ष्यां वि' ख. पाठः. ३. 'खु एसो वु' क. पाठः. ४. 'त्य) अ' क. पाठः. ५. 'कः (सान' क. पाठः.

दृष्टिर्न तृप्यति ऽपरिष्वजतीव साङ्गं
बुद्धिस्त्वरां व्रजति बोधयतीव सुप्ताम् ।
रागोऽभिचोदयति सादयतीव चाङ्गं
हर्षात् प्रसीदति विमुह्यति चान्तरात्मा ॥ १७ ॥

**नलिनिका** — (आत्मगतम्) (क) एसो खु भअवं कामदेवो ओघो विअ उभअपक्खं पीडेइ । (प्रकाशम्) भट्टिदारअ ! अ·ळङ्करीअदु सअणअळं ।

**अविमारकः** — बाढम् । (उपविशति)

**नलिनिका** — (ख) भट्टिदारअ ! किं ओबोधेमि भट्टिदारिअं ।

**अविमारकः** — भद्रे ! अलमलं बालचापलेन । पश्य,

अहं द्विनेत्रो न सहस्रनेत्रो
मतिश्च मूढा सुचिराभिलाषा ।
कामार्णवस्याद्य तु दृष्टपारं
चेक्रीड्यतां मे सुखमक्षियुग्मम् ॥ १८ ॥

**नलिनिका** — (ग) जाणामि जाणामि भट्टिदारिअं अन्त·रेण भट्टिदारअस्स परिस्समं ।

---

(क) एवं खलु भगवान् कामदेव ओघ इवोभयपक्षं पीडयति । भर्तृदारक ! अ·लङ्क्रियतां शयनतलम् ।

(ख) भर्तृदारक ! किमवबोधयामि भर्तृदारिकाम् ।

(ग) जानामि जानामि भर्तृदारिकामन्तरेण भर्तृदारकस्य परिश्रमम् ।

---

१. 'षात् ।' ख. पाठः.

---

ऽ परस्मैपदमात्मनेपदानित्यत्वात् ।

**अविमारकः**— [1]अद्य सफलो मे परिश्रमः।

**कुरङ्गी** — (बुद्ध्वा) (क) हळा! किं णिरणुक्कोसेण भणिअं।

**नलिनिका** —(ख) भट्टिदारिए! भणिदं खु मए पुढमं।

**अविमारकः**— प्राप्तं खलु मया जीवितस्य फलं, येनेयमीदृशं मोहं गता।

**कुरङ्गी** — (आत्मगतम्) (ग) हं परिब्भट्ठम्हि। (प्रकाश[2]म्) हळा! किं मए भणिदं।

**नलिनिका** — (घ) भट्टिदारिए! किञ्चि ण मन्तिदं।

**अविमारकः**— अयमस्या मोहविस्तरेण द्वितीयो मे मोहः।

**कुरङ्गी** — (ङ) णळिणिए! चिरं खु उववट्ठा। का वेळा।

**नलिनिका** —(च) संवुत्तं अद्धरत्तं।

**कुरङ्गी**—(छ) तेण हि परिस्सन्ता[3]सि। एहि परिस्सजेहि मं।

---

(क) हला! किं निरनुक्रोशेन भणितम्।

(ख) भर्तृदारिके! भणितं खलु मया प्रथमम्।

(ग) हं परिभ्रष्टास्मि। हला! किं मया भणितम्।

(घ) भर्तृदारिके! किञ्चिन्न मन्त्रितम्।

(ङ) नलिनिके! चिरं खलूपविष्टा। का वेला।

(च) संवृत्तोऽर्धरात्रः।

(छ) तेन हि परिश्रान्तासि। एहि परिष्वजस्व माम्।

---

१. 'धैव खलु स' क. पाठः. २. 'शम्) कि' क. पाठः. ३. 'न्ता। ए' क. पाठः.

**नलिनिका** — (अपवार्य) (क) अहं संवाहेमि। भट्टिदारअ! परिस्सजेहि भट्टिदारिअं।

**अविमारकः**—(सहर्षम्) बाढम्। एवमेव त्वमपि प्रियशतानि शृणु।

**कुरङ्गी**— (ख) अळं अदिसिणेहेण। एहि दाव।

**नलिनिका** — (ग) भट्टिदारिए! इअह्मि।

**कुरङ्गी** — (बलादाकृष्याविमारकमालिङ्गति) (घ) हं †को दाणिं मं संवाहेदि।

**नलिनिका** —(कर्णे) (ङ) एवं विअ।

**कुरङ्गी** — (ससम्भ्रमम्) (च) हा हीणं चारित्तं। भीदह्मि।

**अविमारकः** —

न त्वं प्रिये! मम नवासि मनोभियोगात्<br>
किं कम्पसे पवनवेगहता लतेव।

---

(क) अहं संवाहयामि। भर्तृदारक! परिष्वजस्व भर्तृदारिकाम्।

(ख) अलमतिस्नेहेन। एहि तावत्।

(ग) भर्तृदारिके! इयमस्मि।

(घ) हं क इदानीं मां संवाहयति।

(ङ) एवमिव।

(च) हा हीनं चारित्रम्। भीतास्मि।

---

† जनाभिप्रायेण पुल्लिँङ्गनिर्देशः।

भद्रे ! भयं त्यज कुरुष्व मयि प्रसादं
किं वा प्रलप्य बहुधा शरणागतोऽस्मि ॥ १९ ॥

(कुरङ्गी सलज्जं नलिनिकां विलोकयति)

**नलिनिका** — (क) भट्टिदारअ ! उट्ठेहि उट्ठेहि । भट्टिदारिआ भणादि । उट्ठेहि किळ ।

**अविमारकः** — बाढम् । (उत्तिष्ठति)

(प्रविश्य)

**धात्री** — (ख) जेदु भट्टिदारओ ।

**अविमारकः** — कथं भवती[1] ।

**धात्री** — (ग) णळिणिए ! अब्भन्तरमण्डवे खु रइदं सअणं । भट्टिदारिअं भट्टिदारअं च तहिं एव्व पवेसेहि ।

**नलिनिका** — (घ) तह ।

(निष्क्रान्ता धात्री)

**नलिनिका** — (ङ) भट्टिदारअ ! अब्भन्तरमण्डवे खु रइदं सअणं । तहिं एव्व पविसदु भट्टिदारिआए सह ।

---

(क) भर्तृदारक ! उत्तिष्ठोत्तिष्ठ । भर्तृदारिका भणति । उत्तिष्ठ किल ।

(ख) जयतु भर्तृदारकः ।

(ग) नलिनिके ! अभ्यन्तरमण्डपे खलु रचितं शयनम् । भर्तृदारिकां भर्तृदारकं च तत्रैव प्रवेशय ।

(घ) तथा ।

(ङ) भर्तृदारक ! अभ्यन्तरमण्डपे खलु रचितं शयनम् । तत्रैव प्रविशतु भर्तृदारिकया सह ।

---

१. 'ती । (उत्तिष्ठति) धा' क. पाठः.

**अविमारकः** — त्वमप्येवं प्रियशतानि शृणु । (हस्तेन तस्या हस्तं गृहीत्वोत्तिष्ठति)

**नलिनिका** — (क) एदु एदु भट्टिदारओ ।

**अविमारकः** — अयमयमागच्छामि ।

(उभौ परिक्रामतः)

**अविमारकः** — (सहर्षम्) अनृणोऽस्मि यौवनस्य । कुतः,

नेत्रे बाष्पपरिप्लुते करधृतौ व्यावल्गमानौ* स्तनौ
श्रोणी चाधिकभारिका न विशदौ पादौ ह्रिया स्यन्दिनौ ।
एतत् सप्तपदप्रमाणमिह भोः! सम्पाद्यते योजना
यद्येषा क्षणदा भवेद् युगशतं धन्यो मदन्यः कुतः ॥

(निष्क्रान्ताः सर्वे)

तृतीयोऽङ्कः ।

---

(क) एत्वेतु भर्तृदारकः ।

* चानशान्तमिदम् ।

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति चाङ्गेरिकाहस्ता मागधिका)

**मागधिका**— (क) अहो परिजणस्स पमादो । आसुय्योदअं पि ण किदा पासादरअणा । ण सुणीअदि गोट्ठीजणकोळाहळो । किंणुखु भवे । आ, रत्तिजागरदाए पभादप्पसुत्ता भवे । जाव भट्टिदारिअं ओबोधेमि । (परिक्रामति)

(ततः प्रविशति विलासिनी वीजनेन)

**विलासिनी**— (ख) मागधिए! चिट्ठ चिट्ठ ।

**मागधिका**— (ग) हळा! मा वारेहि । भट्टिदारिआए सुमणावण्णअं मए आणीअदि ।

**विलासिनी**— (घ) किं भट्टिदारिआए सुमणावण्णएण वा अळङ्कारेण वा ।

**मागधिका**— (ङ) अविणीदे! मा अमङ्गळं भणाहि । सददाळङ्किदा भट्टिदारिआ होदु ।

---

(क) अहो परिजनस्य प्रमादः । आसूर्योदयमपि न कृता प्रासादरचना । न श्रूयते गोष्ठीजनकोलाहलः । किंनुखलु भवेत् । आ, रात्रिजागरतया प्रभातप्रसुप्ता भवेत् । यावद् भर्तृदारिकामवबोधयामि ।

(ख) मागधिके! तिष्ठ तिष्ठ ।

(ग) हला! मा वारय । भर्तृदारिकायै सुमनावर्णकं मयानीयते ।

(घ) किं भर्तृदारिकायाः सुमनावर्णकेन वालङ्कारेण वा ।

(ङ) अविनीते! मा अमङ्गलं भण । सततालङ्कृता भर्तृदारिका भवतु ।

**विलासिनी**—(क) ण खु । आइदी एव्व भट्टिदारिआए अलङ्कारो त्ति भणामि ।

**मागधिका**—(ख) उम्मत्तिए ! णणु पुप्फं वि वासीअदि ।

**विलासिनी**—(ग) सदिसं एदं । सभावरमणीआणि मण्डिदाणि अदिरमणीआणि होन्ति ।

**मागधिका**—(घ) हळा ! सुजोजिदो खु भट्टिदारिआए रूवाणुरूवो भत्ता ।

**विलासिनी**—(ङ) अळं पक्खवादेण । भट्टिदारअस्स समीवे भट्टिदारिआ पदुमिणिआ विअ† दिस्सदि ।

**मागधिका**—(च) सुट्ठु भणादि । अहं वि चिन्तेमि—ससरीरो भअवं कामदेवो ईदिसो भवेत्ति ।

**विलासिनी**—(छ) तह एव्व भट्टिदारिआ भट्टिदारअं विणा खणमत्तं वि ण रमदि ।

---

(क) न खलु । आकृतिरेव भर्तृदारिकाया अलङ्कार इति भणामि ।

(ख) उन्मत्तिके ! ननु पुष्पमपि वास्यते ।

(ग) सदृशमेतत् । स्वभावरमणीयानि मण्डितान्यतिरमणीयानि भवन्ति ।

(घ) हला ! सुयोजितः खलु भर्तृदारिकाया रूपानुरूपो भर्ता ।

(ङ) अलं पक्षपातेन । भर्तृदारकस्य समीपे भर्तृदारिका पद्मिनीव दृश्यते ।

(च) सुष्ठु भणति । अहमपि चिन्तयामि—सशरीरो भगवान् कामदेव ईदृशो भवेदिति ।

(छ) तथैव भर्तृदारिका भर्तृदारकं विना क्षणमात्रमपि न रमते ।

---

† एतदुत्तरं 'सुज्जस्स' इत्यपेक्षितं भाति ।

(ततः प्रविशति सास्रा नलिनिका)

**नलिनिका**—(सशोकम्) (क) सच्चो खु लोअप्पवादो—बहुविग्घाणि सुहाणि त्ति। एसो खु संवच्छरो अदिक्कन्दो भट्टिदारिआए अविच्छिण्णसुहसम्भोएण रदिं करिअ। अह्माअं पुण गोट्ठीजणस्स उत्तरकुरुवासो संवुत्तो। अज्ज उण महाराएण विदिदो एसो खु वुत्तन्तो त्ति सुणिअ सीददि विअ सरीरं। भट्टिदारिआ च ळज्जाभअमअणेहि अभिताळिअमाणा सन्दावेण मुद्धा अवअदचेदणा विअ संवुत्ता। एसो खु पासादो णिव्वाविददीवो विअ मे पडिभादि। तेण भट्टिदारएण विरहिदाए मम एक्कं पि हिअअप्पीदिकरं ण जादं। भट्टिदारओ अविग्घेण णिग्गदो त्ति सुणिअ अज्ज पह्लादिदं विअ मे हिअअं। सम्पदि सुरुद्धं कण्णाउरं। (परिक्रम्य) अम्मो सहीओ। हळा माअधिए! किं एदं[1]।

**मागाधिका**—(ख) हळा! किं पुच्छसि। णं मण्डणवेळा भट्टिदारिआए।

---

(क) सत्यः खलु लोकप्रवादः—बहुविघ्नानि सुखानीति। एष खलु संवत्सरोऽतिक्रान्तो भर्तृदारिकाया अविच्छिन्नसुखसम्भोगेन रतिं कृत्वा। अस्माकं पुनर्गोष्ठीजनस्योत्तरकुरुवासः संवृत्तः। अद्य पुनर्महाराजेन विदित एष खलु वृत्तान्त इति श्रुत्वा सीदतीव शरीरम्। भर्तृदारिका च लज्जाभयमदनैरभिताड्यमाना सन्तापेन मुग्धापगतचेतनेव संवृत्ता। एष खलु प्रासादो निर्वापितदीप इव मे प्रतिभाति। तेन भर्तृदारकेण विरहिताया ममैकमपि हृदयप्रीतिकरं न जातम्। भर्तृदारकोऽविघ्नेन निर्गत इति श्रुत्वाद्य प्रह्लादितमिव मे हृदयम्। सम्प्रति सुरुद्धं कन्यापुरम्। अम्मो सख्यौ। हला मागधिके! किमेतत्।

(ख) हला! किं पृच्छसि। ननु मण्डनवेला भर्तृदारिकायाः।

---

१. 'दं किं एदं' क. पाठः.

**नलिनिका** — (क) अदिक्कन्दो उच्छवो । (रोदिति)

**उभे** — (ख) सिविणं विअ किं एदं । भणाहि समाणा भवामो ।

**नलिनिका** — (ग) सव्वहा गओ भट्टिदारओ ।

**उभे** — हं ।

**नलिनिका** — (घ) अहं पि भट्टिदारिआए दुक्खं पेक्खिदुं असहन्ती इह आअदह्मि ।

**मागधिका** — (ङ) ण सक्कं खु भट्टिदारिआए अवत्थादंसणं । तह वि भट्टिदारिअं अस्सासइस्सामो ।

**उभे** — (च) एवं करेह्म ।

(सर्वा निष्क्रान्ताः)

**प्रवेशकः ।**

---

(ततः प्रविशत्यविमारकः)

---

(क) अतिक्रान्त उत्सवः ।

(ख) स्वप्न इव किमेतत् । भण समाना भवामः ।

(ग) सर्वथा गतो भर्तृदारकः ।

(घ) अहमपि भर्तृदारिकाया दुःखं प्रेक्षितुमसहमानेहागतास्मि ।

(ङ) न शक्यं खलु भर्तृदारिकाया अवस्थादर्शनम् । तथापि भर्तृदारिकामाश्वासयिष्यामः ।

(च) एवं कुर्मः ।

**अविमारकः** —— (सशोकम्)

कन्यापुरात् कथमपीह विनिर्गतं मे
भाग्यावशेषमवलम्ब्य शरीरमात्रम्।
अद्यापि तन्मम मनो न तु मामुपैति
नावेक्षते मयि तया प्रिययावरुद्धम् ॥ १ ॥

कानुखलु भवेदवस्था कुरङ्ग्याः।

ह्रीता भवेत् प्रेष्यजनप्रवादै-
र्भीता च राज्ञा दृढसन्निरुद्धा।
बाष्पाविला मामनवेक्षमाणा
मोहं व्रजेद् रात्रिषु किं करिष्ये॥ २ ॥

हन्त दृष्टः प्रतीकारः। तयापि तावदस्मदपेक्षया नापेक्षित आत्मा। तस्मादहमपि तावत् तदर्थे प्राणान् परित्यजामि। (परिक्रम्य) कतिपयदिवसप्रोषितोऽहमस्मि। अद्य तु मानसं शारीरं च दुःखमसह्यमिव मे प्रतिभाति। इह हि,

निर्व्याजं परिचयवर्धमानरागां
रूपाढ्यामभिनवयौवनां मनोज्ञाम्।
त्यक्त्वा तां क्षणमपि वञ्चितोऽस्मि जीवन्
कष्टोऽन्यः क इह भवेत् कृतघ्नभावः ॥ ३ ॥

सम्प्रति हि मदनेनान्तर्दह्यमानस्य क्षारीभवितुमारब्धो भगवान् सूर्यः सहस्ररश्मिः। (सर्वतो विलोक्य) अहो प्रतिभयता निदाघस्य। सम्प्रतिं हि,

अत्युष्णा ज्वरितेव भास्करकरैरापीतसारा मही
यक्ष्मार्ता इव पादपाः प्रमुषितच्छाया दवाग्न्याश्रयात्।

विक्रोशन्त्यवशादिवोच्छ्रितगुहाव्यात्ताननाः पर्वता
लोकोऽयं रविपाकनष्टहृदयः संयाति मूर्छामिव ॥ ४ ॥

किमिदानीं करिष्ये । न चास्म्यहं गन्तुं समर्थः । कुतः,

लिम्पन्ति रूक्षपवनाः सिकताग्निचूर्णैः
संस्वेदयन्ति च नगाः परुषैः पलाशैः ।
दावैर्द्रवीकृततनुः स्रवतीव भास्वा-
नादित्यपाकचलितः फलतीव लोकः ॥ ५ ॥

हा प्रिये! हा सुन्दरि! देहि मे प्रतिवचनम् । (मूर्छां नाटयति । पुनर्निःश्वस्य । ऊर्ध्वमवलोक्य) रुद्धः खलु भगवान् सूर्यः सहस्ररश्मिः। अथवा,

किमत्र चित्रं विततः पयोदा
रुन्धन्ति सूर्यं ननु वातनीताः ।
अन्तःस्थितं मे यदि वारयन्ति
कामं भवेद् विस्मयनीयमेतत् ॥ ६ ॥

किमनेन जीवन्मरणेन । विसर्जयिष्याम्यात्मानम् । (उत्थाय परिक्रामति) किन्नुखलु करिष्ये । भवतु दृष्टम् । अस्मिन्नारण्यतटाके विसर्जयिष्याम्यात्मानम् । धिगधर्मः खलु मे मरणमार्गः । अभिमानमोहान्महापथो विस्मृतः । अन्यथा प्रयतिष्ये । (विलोक्य) भवतु दृष्टम् । अये अदूरे दृश्यते दवाग्निः । तस्मिन् प्राणानाहुतिं करिष्यामि । (उपगम्य प्रणम्य च) भगवन्! अग्ने!

इष्टं चेदेकचित्तानां यद्यग्निः साधयिष्यति ।
परत्रापि च मे कान्ता सा भवेदेककीर्तनी ॥ ७ ॥

(अग्निं प्रविश्य सकुतूहलम्) किमिदं वर्तते ।

दग्धाः स्फुलिङ्गनिकरैर्निपतन्ति वृक्षा
ज्वालाश्च मे मलयचन्दनपङ्कशीताः ।
अग्निर्दयां हि कुरुते मदनातुरेऽति
पुत्रं पितेव च *परिष्वजति प्रहृष्टः ॥ ८ ॥

भोः ! किमतः परं विस्मयनीयम् । अग्निः खलु मां न दहति । अथवा †एतदप्यस्तिकारणम् । अन्यथा प्रयतिष्ये (परिक्रम्य) एष खलु महान् पर्वतः,

असितजलदवृन्दैर्मिश्रसन्दिग्धशृङ्गो
गगनचरकुलानां विश्रमस्थानभूतः ।
सुकविमतिविचित्रो[1] मित्रसंयोगहृद्यो
नरपतिरिव नीचो दृश्यते निष्फलाढ्यः ॥ ९ ॥

भवतु तावदस्मिञ्छैले प्राणान् परित्यजामि । मरुत्प्रपातो हि सर्वार्थसाधकः । यावदारोहामि । (आरुह्यावलोक्य) एतत् पानीयं गोत्रस्थं स्नात्वोपस्पृश्य मन्त्रं जपामि । (तथा कृत्वा जपति)

---

१. 'त' क. पाठः.

---

* आत्मनेपदाकरणमनित्यत्वात् । 'परिष्वजते' इत्येव वा पाठो भवेत् । † एतद् अदहनमपि अस्तिकारणं विद्यमानकारणकम् ।

(ततः प्रविशति विद्याधरः सह प्रियया)

**विद्याधरः—**

प्राक्सन्ध्या कुरुषूत्तरेषु गमिता स्नातः पुनर्मानसे
भूयो मन्दरकन्दरान्तरतटेष्वामोदितं यौवनम्[1] ।
क्रीडार्थं हिमवद्गुहासु चरितौ दृष्टिश्च संलोभिता
यास्यावो मलयस्य चन्दननगान्मध्याह्ननिद्रासुखान् ॥ १० ॥

(आकाशयानं निरूप्य) सौदामनि! पश्य पश्य भगवत्या वसुन्धराया दूरस्थां दर्शनीयामाकृतिम् । इह हि,

शैलेन्द्राः कलभोपमा जलधयः क्रीडातटाकोपमा
वृक्षाः शैवलसन्निभाः क्षितितलं प्रच्छन्ननिम्नस्थलम् ।
सीमन्ता इव निम्नगाः सुविपुलाः सौधाश्च बिन्दूपमा
दृष्टं वक्रमिवाभिभाति सकलं संक्षिप्तरूपं जगत् ॥ ११ ॥

भद्रे! अवहिता भव । शीतचन्दनानिलयं मलयं प्रयास्यावः ।

**सौदामनी—** (क) अय्य ! तह ।

(उभावाकाशयानं निरूपयतः)

**सौदामनी—** (ख) अय्य! ण पारेमि अविस्सन्ता गन्तुं ।

**विद्याधरः—** तेन हि कस्मिंश्चित् पर्वते मुहूर्तं विश्रम्य[2] गमिष्यावः ।

---

(क) आर्य ! तथा ।
(ख) आर्य! न पारयाम्यविश्रान्ता गन्तुम् ।

---

१. 'तं' ख. पाठः, २. 'म्य यास्यावः' ख. पाठः.

**सौदामनी** — (क) अय्य! पिअं मे ।

(उभाववतरतः)

**विद्याधरः** — सौदामनि! पश्य पश्य ।

जलदगहनमुज्झतीव वेगा-
दभिपततीव मही समुद्रमुद्रा ।
जलदसमयतोयदा इवामी
भृशमभिभान्ति नगा विजृम्भमाणाः ॥ १२ ॥

भवति! अयं पर्वतः समर्थ इवास्माकं मुहूर्तमातिथ्यं कर्तुम् । तस्माद् विश्रान्तौ गमिष्यावः[1] ।

**सौदामनी** — (ख) अय्य! एवं[2] करेह्म ।

**विद्याधरः** — सौदामनि! पुष्पितानां नगानां षड्भागग्रहणमस्माकं धर्मः । तस्मादनृणान् वृक्षान् करिष्यावः ।

**सौदामनी** — (ग) अय्य! तह ।

(पुष्पापचयं नाटयतः)

**विद्याधरः** — (अविमारकं विलोक्य) अये कोनुखल्वयम् । आ ज्ञातम् । विद्याधरः खलु मन्त्रभ्रष्टः । कुतः, रूपमीदृशं हि नान्येषाम् । दिष्ट्या यदयं दृष्टः । भवत्वहमपि विस्मृतं पृच्छामि ।

---

(क) आर्य! प्रियं मे ।
(ख) आर्य! एवं कुर्वः ।
(ग) आर्य! तथा ।

---

१. 'यास्यावः' ख. पाठः. २. 'वं । वि' ख. पाठः.

**अविमारकः**— भवतु कृतं देवकार्यम् । प्रपतामि । (पार्श्वतो विलोक्य, विद्याधरं दृष्ट्वा) भोः! कोनुखल्वयम् । अथवा, स्वप्नोऽयं भवेत् । न ह्यहं सुप्तः । आ अन्तकाले मनुष्याः किमपि पश्यन्ति । तदेतत् स्यात् । तदपि संमूढानां खलु । अहं तु सर्वं जानामि । भवतु पृच्छाम्येनम् । भोः! कतरकुलान्वयो भवतालङ्क्रियते ।

**विद्याधरः**— श्रूयताम्— 'अहं मेघनादो नाम विद्याधरः । इयं तावदस्मत्कुटुम्बिनी सौदामनी नाम । अद्य भगवन्तमगस्त्यमाराधयितुं मलयपर्वते विद्याधरैरुत्सवः प्रारब्धः । तत्र वयमपि सङ्केतिताः । इह मुहूर्तं विश्रम्य गमिष्याव इत्यवतीर्णाः । एषोऽस्माकं वृत्तान्तः । अथ किमर्थमिदानीं भवान् क्षितितलं देवलोकीकरोति ।

**अविमारकः**— (आत्मगतम्) किन्नुखलु वक्तव्यम् । वर्तमाने ममान्तकालेऽनृतं न वक्तव्यम् । (प्रकाशम्) भोः! सौवीरराजपुत्रोऽविमारको नाम्नास्मि ।

**विद्याधरः**— (आत्मगतम्) एतदनृतम् । नेयमाकृतिर्मानुषी । (प्रकाशम्) अथ किमर्थमेकाकी भवानिहागतः ।

**अविमारकः**— (आत्मगतम्) किन्नु खलु वक्ष्यामि । (अधोमुखस्तिष्ठति)

**विद्याधरः**— (आत्मगतम्) भवत्वहमेव ज्ञास्यामि । (विद्यामावर्तयति) भोः! कष्टम् । अयं खलु भगवतोऽग्नेः पुत्र आत्मानं न

जानाति, कुन्तिभोजदुहितरं कुरङ्गीमभिलषमाणो‡ रममाणश्च तत्र विदिते सति निर्गतः, पुनः प्रवेशोपायमलभमानः प्राणपरित्यागाभिलाषी मरु[1]त्प्रपातं कर्तुमिहारूढः । सापि च तत्र जीवन्मरणमनुभवति । अहमस्यास्मिन् कार्ये सहायो भविष्यामि । (प्रकाशम्) भो अविमारक! अच्छलं मित्रत्वं नाम । न शक्नोषि मया विदितमर्थं प्रच्छादयितुम् ।

**अविमारकः**—उच्यताम् ।

**विद्याधरः**—अद्यप्रभृत्यावयोः सख्यमस्तु । सकला च भवतोऽस्माभिरवस्था विदिता । प्राणपरित्यागार्थमिहारूढो भवान् ननु ।

**अविमारकः**—वयस्य! एवमेतत् ।

**विद्याधरः**—भोः! प्रीतोऽस्म्यनेन विस्रम्भेण । यदि तत्राज्ञातमेव प्रवेष्टुं स्यादुपायः, किं करिष्यति भवान् ।

**अविमारकः**—(सहर्षम्) किमन्यत् । अनुप्रवेक्ष्यामि । तदर्थो हि व्याक्षेपः ।

**विद्याधरः**—तेन हि सखे! दृश्यतामङ्गुलीयम् । (इत्यङ्गुलीयकं दर्शयति)

**अविमारकः**—वयस्य! किमनेन प्रयोजनम् ।

---

१. 'रुत्पा' क. पाठः.

---

‡ चानशान्तमिदम् ।

**विद्याधरः** — एतदङ्गुलीयकं दक्षिणाङ्गुल्या धारयन्नदृश्यो भवति, वामेन प्रकृतिस्थः।

**अविमारकः** — वयस्य! एतदप्यास्ति।

**विद्याधरः** — अयं ते प्रत्ययं करिष्यामि। वयस्य! किं मां पश्यसि[1]।

**अविमारकः** — एवम्।

**विद्याधरः** — अवहितो भव।

**अविमारकः** — अवहितोऽस्मि।

**विद्याधरः** — (दक्षिणाङ्गुल्यां प्रक्षिप्य) वयस्य! किं मां पश्यसि।

**अविमारकः** — वयस्य! छायापि न दृश्यते, किं पुनः शरीरम्। एते खलु लोके सुखिनो नाम।

> ये सञ्चरन्ति गगने वनितासहायाः
> क्रीडन्ति पर्वततटेषु कृतोपदेशाः।
> सर्वं विदन्त्यपि च मन्त्रकृतैः प्रभावै-
> रन्तर्हिताश्च विवृताश्च सुखं भ्रमन्ति[2] ॥ १२ ॥

भवतु, प्रविष्ट एवास्म्यनेन।

**विद्याधरः** — (वामाङ्गुल्यां प्रक्षिप्य) तेन हि गृह्यतामङ्गुलीयकम्।

**अविमारकः** — (प्रतिगृह्य) अनुगृहीतोऽस्मि।

**विद्याधरः** — न[3] न, अहमेवानुगृहीतः। कुतः,

> न तथा रत्नमासाद्य सुजनः परितुष्यति।
> यथा तत् तद्गताकाङ्क्षे पात्रे दत्त्वा प्रहृष्यति ॥ १४ ॥

---

१. 'सि। अवहि' क. पाठः. २. 'चरन्ति' क. पाठः. ३. 'नन्वह' क. पाठः.

अविमारकः—एकस्तु मे संशयः। मम शरीरे परीक्षितुमिति वक्तुमसदृशमिव।

विद्याधरः—तेन हि प्रक्षिप दक्षिणाङ्गुल्याम्।

अविमारकः—बाढम्। (तथा करोति)

विद्याधरः—वयस्य! गृह्यतामसिः।

अविमारकः—बाढम्। (खड्गं गृहीत्वा सविस्मयम्) अहो खड्गस्य प्रभावः।

प्रच्छन्नरूपस्त्वशनिः कथञ्चित्
खड्गीकृतः स्यात्तु तडित्कलापः।
निर्भर्त्सयन् सूर्यकृतां प्रदीप्तिं
वनं दवाग्निः सहसाभ्युपैति ॥ १५ ॥

विद्याधरः—अहो वीर्यमग्निपुत्रस्य। अस्य खड्गस्य प्रभावं विद्याधरेष्वपि कतिचित् सहन्ते। अग्निः खलु भगवानिमं रक्षति।

अविमारकः—(खड्गे दृष्ट्वा) अहो भगवतीनां विद्यानां प्रभावः।

दिव्यं स्वभावं समुपागतोऽस्मि
स एव नामा[1]स्मि गुणैर्विशिष्टः।
इदं यदा निर्गुणमर्त्यवृन्दै-
र्न ज्ञायते चास्ति च मे शरीरम् ॥ १६ ॥

वयस्य! कृतमस्मत्कार्यम्। गृह्यतामसिः।

---

१. 'म्ना' ख. पाठः.

**विद्याधरः**—यदिष्टं भवतः । वयस्य! अन्तर्हितश्चान्तर्हितस्पृष्टश्च तत्स्पृष्टश्चान्तर्हिता भवन्तीति निश्चयः ।

**अविमारकः**—सखे! प्रीतोऽस्मि । अयमभ्युदयादभ्युदयः । सखे! अस्मदपेक्षया विलम्बितमिति तर्कयामि । मा भूदिदानीं वेलातिक्रमः ।

**विद्याधरः**—प्रविष्टोऽस्मि, यद्यापृष्टो भवान् ।

**अविमारकः**—किं बहुना भाषितेन ।

विद्यावशानां तु भवद्विधानां
कोऽस्मद्विधः स्यात् प्रतिकर्तुकामः ।
क्रीतोऽस्म्यहं जीवितसम्प्रदानात्
प्रशाधि मां किं करवाणि भृत्यः ॥ १७ ॥

**विद्याधरः**[1]—जानाम्यहं भवतोऽच्छलां बुद्धिम् । यदि च भवानस्मद्वचनमनुवर्तते,

सख्यै मम प्रतिनिवेदय मामिमां च
त्वं मामनुस्मर सखे! गतिरीक्ष्यतां मे ।
क्रीडारसैः प्रतिविलोभय राजपुत्रीं
कार्यान्तरेषु पुनरप्यहमस्मि पार्श्वे ॥ १८ ॥

अहो पुरुषसारो हि नाम नेच्छति विसर्जयितुं मे मनः । वयस्य । गच्छामस्तावत् ।

**अविमारकः**—गच्छतु भवान् पुनर्दर्शनाय ।

---

१. 'रः-भवतु जा' ख. पाठः.

**विद्याधरः**— बाढम् ।

(उत्थितो विद्याधरः सह प्रियया)

**अविमारकः**—(ऊर्ध्वमवलोक्य) एष हि तत्रभवान् मेघनादो गगनार्णवमवगाढः । य एषः,

वातोद्धूताग्रकेशः सलिलधरदरीमृष्टनष्टाङ्गरागः
सम्यग्बद्धासिकक्ष्यः प्रिययुवतिकरस्पृष्टसङ्गूढमध्यः ।
वातोद्धूतोत्तरीयो मुकुटमणिगणैस्तारकाः सम्प्रमृद्नन्
श्रीमान् विद्याधरोऽसावुपरिगतिजवैः क्षीयमाणः प्रयाति ॥१९॥

इयमपि विद्याबलेन प्रियमनुवर्तते । यैषा,

जवशिथिलविमुक्तपार्श्वकेशी
स्तनतटवल्गनखिन्नसन्नमध्या ।
वियति दयितदत्तपूर्वकाया
तडिदिव तोयधरेषु दृष्टनष्टा ॥ २० ॥

गतस्तत्रभवान् मेघनादः । अहमप्यद्यैव नगराभिमुखो भविष्यामि । यावदवतरामि । (अवतीर्य) परिश्रान्त इवास्मि । भवतु, एतस्मिन् शिलातले मुहूर्तं विश्रम्य गमिष्यामि । (उपविशति)

(ततः प्रविशति विदूषकः)

**विदूषकः**— (क) अहो तत्तहोदो सुगहीदणामहेअस्स सोवीरराअस्स अधण्णदा, (जा)ए* चिरं अपुत्तो भविअ अत्तणो

---

(क) अहो तत्रभवतः सुगृहीतनामधेयस्य सौवीरराजस्याधन्यता, यया चिरमपुत्रो

---

* 'अधण्णदा, जाए' इति पाठकरणे सामञ्जस्यं भवति ।

णिअमविसेसेण देव्वप्पसादेण अ माणुसळोअदुळ्ळभं सुपुत्तं ळभिअ पुणो वि तादिसो एव संवुत्तो । सव्वहा मम अ समत्तजीविददाए बन्धुजणस्स अधण्णदाए परिब्भट्ठो कुमारो। (परिक्रम्य) अज्ज खु तत्तहोदीए भणिदं— खेमेण गदो कुमारो त्ति । अहव को एत्थ जाणादि अदिसुउमारो राअउमारो एआई वम्महेण अभिताळिअमाणो परिब्भट्ठो कुसळो होदि त्ति । अहं वि कुमारं वा कुमारस्स सरीरं वा पेक्खिस्सामि दाव सव्वळोअं परिब्भमिअ । जदि ण पेक्खामि, तत्तहोदो परत्त सहाओ होमि । परिस्सन्तो खु अहं । भोदु, एदस्सिं पादपच्छाआअं मुहुत्तअं विस्समिअ गमिस्सं । (स्वपिति)

**अविमारकः**—कानुखलु सन्तुष्टस्यावस्था । सुष्ठु भवेद् यदि मे निर्गमनं तेन श्रुतं, न श्रुतं चेद् विपत्स्यते स ब्राह्मणः । अथवा किं मम सर्वारम्भैस्तेन विना । स हि,

गोष्ठीषु हास्यः समरेषु योधः
शोके गुरुः साहसिकः परेषु ।

---

मूत्वात्मनो नियमविशेषेण दैवप्रसादेन च मानुषलोकदुर्लभं सुपुत्रं लब्ध्वा पुनरपि तादृश एव संवृत्तः। सर्वथा मम च समातजीविततया बन्धुजनस्याधन्यतया परिभ्रष्टः कुमारः । अद्य खलु तत्रभवत्या भाणितं — क्षेमेण गतः कुमार इति। अथवा कोऽत्र जानाति अतिसुकुमारो राजकुमार एकाकी मन्मथेनाभिताड्यमानः परिभ्रष्टः कुशलो भवतीति । अहमपि कुमारं वा कुमारस्य शरीरं वा प्रेक्षिष्ये तावत् सर्वलोकं परिभ्रम्य । यदि न प्रेक्षे, तत्रभवतः परत्र सहायो भवामि । परिश्रान्तः खल्वहम् । भवतु, एतस्यां पादपच्छायायां मुहूर्तकं विश्रम्य गमिष्यामि ।

महोत्सवो मे हृदि किं प्रलापै-
र्द्विधा विभक्तं खलु मे शरीरम् ॥ २१ ॥

(सर्वतो विलोक्य) अये कोनुखलुच्छायायामध्वगः प्रसुप्तः । (उपेत्य) अभ्युदयो मे हृदयस्य[1] यदृच्छयागतः । त्वरते मे मनः परिष्वक्तुमेनम् ।

**विदूषकः**—(बुद्ध्वा) (क) चिरं खु सुत्तह्मि । जाव गच्छामि । को विस्समो णाम विब्भट्ठमणोरहाणं । (परिक्रम्याविमारकं विलोक्य) कहं तत्तभवं अविमारओ ।

**अविमारकः**—अये वयस्यः सन्तुष्टः ।

(उभौ परिष्वजेते)

**विदूषकः**—(उच्चैर्विहस्य) (ख) भो वअस्स! केहेहि[2] कहेहि एत्तिअं काळं किं तुए किदं ।

**अविमारकः**—वयस्य! एतत् कृतम् । (अङ्गुलीयकं दक्षिणाङ्गुल्यां प्रक्षिप्य तिरस्कृतः)

**विदूषकः**—(ग) हा हा कहिं कहिं तत्तभवं । कहं ण दिस्सदि । आ तस्सिं गदाए चिन्ताए तं विअ पेक्खामि । अहव

---

(क) चिरं खलु सुप्तोऽस्मि । यावद् गच्छामि । को विश्रमो नाम विभ्रष्टमनोरथानाम् । कथं तत्रभवान् अविमारकः ।

(ख) भो वयस्य! कथय कथयैतावन्तं कालं किं त्वया कृतम् ।

(ग) हा हा क्व क्व तत्रभवान् । कथं न दृश्यते । आ तस्मिन् गतया चिन्तया

---

१. 'स्य । त्व' क. पाठः. २. 'भणेहि भणेहि' क. पाठः.

फुडीकरिस्सं । भो वअस्स! सावेण[1] साविदो सि, जदि अत्ताणं छादेसि ।

**अविमारकः**—वयस्य! अयमस्मि ।

**विदूषकः**—(क) कहिं कहिं सि ।

**अविमारकः**—(वामाङ्गुल्यामङ्गुलीयकं प्रक्षिप्य) वयस्य! अयमस्मि ।

**विदूषकः**—(ख) पुढमं सुद्धो अविमारओ, इदाणिं माआविमारओ संवुत्तो । एवं माआवित्तअ! किस्स तुवं कण्णाउरे पच्छण्णरूवो ण चरसि ।

**अविमारकः**—वयस्य[2]! इदानीं खल्वेतदुपलब्धम् ।

**विदूषकः**—(ग) अच्छरीअं अच्छरीअं । कुदो दाणि एदस्स आगमो ।

**अविमारकः**—सर्वमन्तःपुरे कथयिष्यामि ।

---

तमिव पश्यामि । अथवा स्फुटीकरिष्यामि । भो वयस्य! शापेन शापितोऽसि, यद्यात्मानं छादयसि ।

(क) क्व क्वासि ।

(ख) प्रथमं शुद्धोऽविमारकः, इदानीं मायाविमारकः संवृत्तः । एवं मायावित्तक! कस्मात् त्वं कन्यापुरे प्रच्छन्नरूपो न चरसि ।

(ग) आश्चर्यमाश्चर्यम् । कुत इदानीमेतस्यागमः ।

---

१. 'भावे' ख. पाठः. २. 'मूर्ख! इ' ख. पाठः.

**विदूषकः**—(क) सम्पदि बुभुक्खिदो सि।

**अविमारकः**—वैधेय! शीघ्रमागच्छ प्रक्षेपभूमिप्रवेशाय। नैवायं हस्तो मोचयितव्यः।

**विदूषकः**—(ख) अच्छरीअं अच्छरीअं। अहं पि दाव अदिस्सो। मम सरीरं अत्थि वा णत्थि वा। उच्छिट्ठं करिस्सं। थु थु।

**अविमारकः**[1]—मूर्ख! अलमलं विलम्बितेन। त्वरते मे मनः कान्तादर्शनाय। (आकर्षति)

**विदूषकः**—(ग) ण मे सद्धा।

**अविमारकः**—हन्त भोजनवेलां प्रतिपालयामि[2]।

**विदूषकः**—(घ) कञ्चि काळं विस्समिअ गमिस्सामो।

**अविमारकः**—किं न स्मरति मां कुरङ्गी।

**विदूषकः**—(ङ) किण्णुखु जीवदि णग्गन्धस्समणिआ।

**अविमारकः**—वयस्य! याचे भवन्तं, शीघ्रमागम्यताम्।

---

(क) संप्रति बुभुक्षितोऽसि।

(ख) आश्चर्यमाश्चर्यम्। अहमपि तावददृश्यः। मम शरीरमस्ति वा नास्ति वा। उच्छिष्टं करिष्यामि। थु थु।

(ग) न मे श्रद्धा।

(घ) कंचित् कालं विश्रम्य गमिष्यावः।

(ङ) किंनुखलु जीवति नग्नान्धश्रमणिका।

---

१. 'कः—अ' क. पाठः. २. 'द' ख. पाठः.

**विदूषकः—** (क) किस्स तुवं किदसमावुत्तो वडुओ विअ तुवरसि ।

**अविमारकः—** मूर्ख! इतस्तावत् ।

**विदूषकः—** (ख) मा कड्ढे(हि), अअं अणुधावामि ।

**अविमारकः—** (परिक्रम्य) एतन्नगरम् ।

**विदूषकः—** (ग) पेक्खामि दाव णअरस्स सोहं ।

**अविमारकः—** इदं राजकुलम् ।

एतन्नरेन्द्रभवनं निशि जातशङ्को
यत् साहसं समुपलभ्य तथा प्रविष्टः ।
भूयस्तदेव दिवसे सुसहायमायो
वृन्दं[2] सतामिव पटुः प्रविशाम्यशङ्कः ॥ २२ ॥

(परिक्रम्य) इदानीं प्रासादे स्नातयाभ्यन्तरस्थया कुरङ्ग्या भवितव्यम् ।

**विदूषकः—** (घ) जहिं वा तहिं वा पविसामो । अदिक्कमदि भिक्खवेळा ।

---

(क) कस्मात् त्वं कृतसमावर्तो वटुक इव त्वरसे ।

(ख) मा कर्ष, अयमनुधावामि ।

(ग) पश्यामि तावन्नगरस्य शोभाम् ।

(घ) यत्र वा तत्र वा प्रविशावः । अतिक्रामति भिक्षावेला ।

---

१. 'का' क. पाठः. २. 'वृन्दासता' क. पाठः.

अविमारकः — एहि तावदभ्यन्तरमेव प्रविशावः। (प्रविश्य) इह हि,

पुरे गृहे वापि पुरा सुखोषितै-
र्मनस्विभिर्दुर्लभचिन्तयागतैः।
पुनः कृतार्थैर्मुदितान्तरात्मभिः
सुखं प्रवेष्टुं सविशेषकर्मभिः॥ २३॥

(निष्क्रान्तौ)

चतुर्थोऽङ्कः।

---

## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशति कुरङ्गी नलिनिका च)

**नलिनिका** — (क) भट्टिदारिए ! अळं सन्दावेण । कण्णाउरप्पासादं आळुहिअ दिट्ठिविळोभणं करिस्सामो ।

**कुरङ्गी** — (ख) हळा ! किं तुए मम हिअअं परिञ्ञादं । एत्थ हि अजाणन्तेण परिजणेण मम परितोसणिमित्तं बउळसरळसज्जज्जुणकदम्बणीवणिउ(र ? ळ)प्पहुदीणि मेहकाळवल्ळहाणि परमसुरहीणि आणीअमाणाणि मं उम्मादअन्ति । अह अ इमे मोरा अह्माअं राअउळमाणसे अदिपीठमद्दभावं करन्ति । अह्मेहि सददळाळिदा वि अदेसकाळञ्ञदाए अत्तणो अ(दि ?- हि)कञ्ञभावं दंसेदि । सुअसारिआ वि वक्खाणं एव्व कहेदुं आरद्धा । मम णिव्वेदभावं अजाणन्ती भूदिअसारिआ वि सव्वळोअवुत्तन्तं कहइस्सामि त्ति आअदा । मम रोआवत्थं

---

(क) भर्तृदारिके ! अलं सन्तापेन । कन्यापुरप्रासादमारुह्य दृष्टिविलोभनं करिष्यावः ।

(ख) हला ! किं त्वया मम हृदयं परिज्ञातम् । अत्र ह्यजानता परिजनेन मम परितोषनिमित्तं वकुलसरलसर्जार्जुनकदम्बनीपनिचुलप्रभृतीनि मेघकालवल्लभानि परमसुरभीण्यानीयमानानि मामुन्मादयन्ति । अथ चेमे मयूरा अस्माकं राजकुलमानसे अतिपीठमर्दभावं कुर्वन्ति । अस्माभिः सततलालिता अप्यदेशकालज्ञतयात्मनोऽधिकज्ञभावं दर्शयन्ति । शुकशारिकापि व्याख्यानमेव कथयितुमारब्धा । मम निर्वेदभावमजानन्ती भूतिकशारिकापि सर्वलोकवृत्तान्तं कथयिष्यामीत्यागता । मम रोगावस्थां प्रष्टु-

---

१. 'सणाणि' ख. पाठः.

पुच्छिदुं आअदो परिजणो मं णिब्बन्धिअ णिवेदेदि[1] । ता इच्छामि मुहुत्तअं पासादे अच्छिदुं (?) ।

**नलिनिका** — (क) जं भट्टिदारिआए रुइदं । होदु ।

(उभे आरोहतः)

**कुरङ्गी** — (ख) हळा! एत्थ वि महन्तो अणत्थो उट्ठिदो विज्जुप्पदीवं धारिअ काळमेहो ।

**नलिनिका** — (ग) भट्टिदारिए! अळं उक्कण्ठिदेण । पेक्ख पेक्ख णवसलिळधररुद्धसुय्यं पविरळजळणिवाददस्सणीअं गअणअळं ।

**कुरङ्गी** — (घ) पेक्खामि अ रमणीअं आआसं ।

(ततः प्रविशत्यविमारको विदूषकश्च)

**अविमारकः** — वयस्य! दृष्टा सा कुरङ्गी । यैषा,

रोगादकालागुरुचन्दनार्द्रा
विमुक्तभूषा गतहावभावा ।

---

मागतः परिजनो मां निर्बध्य निवेदयति । तदिच्छामि मुहूर्तकं प्रासादे (आसितुम् ?) ।

(क) यद् भर्तृदारिकायै रुचितम् । भवतु ।

(ख) हला! अत्रापि महाननर्थ उत्थितः विद्युत्प्रदीपं धृत्वा कालमेघः ।

(ग) भर्तृदारिके! अलमुत्कण्ठितेन । पश्य पश्य नवसलिलधररुद्धसूर्यं प्रविरलजलनिपातदर्शनीयं गगनतलम् ।

(घ) पश्यामि च रमणीयमाकाशम् ।

---

१. 'देदुं ।' क. पाठः.

विभाति निर्व्याजमनोहराङ्गी
वेदश्रुतिर्हेतुविवर्जितेव ॥ १ ॥

**विदूषकः** — (क) भो ! तुट्ठो ह्मि । तुवं खु सव्वळोए अहं सुरूवो त्ति अत्ताणं आअरसि । जिदो दाणि तत्तहोदीए सहावरमणीएण रूवेण । चिन्तेमि भवदो विओएण इअं तणुआ जादा । एवं पि एसा[1] बाळचन्दळेहा विअ दिट्ठिं तोसेदि ।

**अविमारकः** — सखे ! अतिपण्डित इवै[2], किमेतत् ।

**विदूषकः** — (ख) भो ! णिच्चपरिचै[3]एण मं परिहँ[4]सासि । अपुव्वो जणो मम बुद्धिं अजाणन्तो अहिअदरं पसंसेदि । अहं पि तं जाणिअ एदस्सिं णअरे केण वि विस्सम्भं ण करेमि ।

**अविमारकः** — अलमौदासीन्येन । बहुजनपरिवारतया न लब्धः क्षणः कान्तां प्रबोधयितुम् । तदिदानीं प्रासादगतामपि तत्रैव तां बोधयिष्यावः ।

---

(क) भोः ! तुष्टोऽस्मि । त्वं खलु सर्वलोकेऽहं सुरूप इत्यात्मानमाचरसि । जित इदानीं तत्रभवत्याः स्वभावरमणीयेन रूपेण । चिन्तयामि भवतो वियोगेनेयं तनुका जाता । एवमप्येषा बालचन्द्रलेखेव दृष्टिं तोषयति ।

(ख) भोः ! नित्यपरिचयेन मां परिहससि । अपूर्वो जनो मम बुद्धिमजानन्नधिकतरं प्रशंसति । अहमपि तद् ज्ञात्वैतस्मिन्नगरे केनापि विस्रम्भं न करोमि ।

---

१. 'त्थ' क. पाठः, २. 'ति कि' क. पाठः. ३. 'अ' ख. पाठः, ४. 'भवस्सासि' ख. पाठः.

**विदूषकः** — (क) सुट्ठु भवं भणादि । पासादं आळुहामो ।

**अविमारकः** — सखे ! प्रयत्नादारोढव्यं यथा *तथा न प्रवर्तते प्रासादशब्दः ।

**विदूषकः** — (ख) भो! ण सक्कं एदं । को सकदि उच्छिट्ठं णकरन्तो भुञ्जिदुं । अहं एत्थ चिट्ठामि । तुवं एव आळुह ।

**अविमारकः** — यदि विमुञ्चे, दृश्यते भवान् ।

**विदूषकः** — (ग) भो ! विस्सरिदं खु मए एदं । पुणो पुणो कहेहि ।

**अविमारकः** — इतस्तावत् । (आरुह्यावलोक्य) सखे ! इयमस्मत्कान्ता शिलातले नलिनिकया सहास्ते । यैषा,

सव्ये करे समुपवेश्य मुखं सुदीनं
कालं मनोभवसहायममृष्यमाणा ।
व्यग्रा विचिन्तयाति किञ्चिदलोलदृष्टि-
र्बाष्पं निवारयितुमूर्ध्वमवेक्षमाणा ॥ २ ॥

---

(क) सुष्ठु भवान् भणति । प्रासादमारोहावः ।

(ख) भोः ! न शक्यमेतत् । कः शक्नोत्युच्छिष्टमकुर्वन् भोक्तुम् । अहमत्र तिष्ठामि । त्वमेवारोह ।

(ग) भोः ! विस्मृतं खलु मयैतत् । पुनः पुनः कथय ।

---

* तथाशब्दो यथाशब्दात् प्राक् प्रयोज्यो वा स्यात् प्रक्षिप्तो वा । प्रयोगविशेष एव वायमपूर्वः कश्चिद् विवक्षितेऽर्थे ।

**कुरङ्गी**—(स्वगतम्[1]) (क) किं एदेण जीवम्मरणेण। (प्रकाशम्) णळिणिए[2]! गच्छ, माअधिअं आणेहि उवह्लाणेण ।

**नलिनिका**—(ख) एआइणिं भट्टिदारिअं उज्झिअ कहं गमिस्सं । ण हु[3] एत्थ को वि[4] जणो ।

(प्रविश्य)

**हरिणिका**—(ग) जेदु भट्टिदारिआ[5]। भट्टिदारिए! भट्टिणी भणादि—सम्पदि कीदिसी सीसवेदणत्ति । एदं[6] वि ओसधं ळिम्पेहि किळ ।

**कुरङ्गी**—(घ) णळिणिए! गच्छ दाणि तुवं । तक्केमि देवो वरिसिदुं आरद्धो । अहं इच्छामि अहिणवेण आआसतोएण ह्लादुं । ता तुवारेहि उवह्लाणं ।

**नलिनिका**—(ङ) जं भट्टिदारिआ आणवेदि ।

---

(क) किमेतेन जीवन्मरणेन । नलिनिके! गच्छ, मागधिकामानयोपस्नानेन ।

(ख) एकाकिनीं भर्तृदारिकामुज्झित्वा कथं गमिष्यामि । न खल्वत्र कोऽपि जनः ।

(ग) जयतु भर्तृदारिका । भर्तृदारिके! भट्टिनी भणति—सम्प्रति कीदृशी शीर्षवेदनेति । एतदप्यौषधं लिम्प किल ।

(घ) नलिनिके! गच्छेदानीं त्वम् । तर्कयामि देवो वर्षितुमारब्धः । अहमिच्छाम्यभिनवेनाकाशतोयेन स्नातुम् । तत् त्वरयोपस्नानम् ।

(ङ) यद् भर्तृदारिकाज्ञापयति ।

---

१. 'आत्मग' ख. पाठः. २. 'ए! मा' क. पाठः. ३. 'हि' ख. पाठः. ४. 'चि' ख. पाठः. ५. 'आ । भट्टिणी' क. पाठः. ६. 'एध ओ' क. पाठः.

**अविमारकः** — किन्नुखल्वनया व्यवसितम् ।

**कुरङ्गी** — (क) हळा! एहि दाव ।

**नलिनिका** — (ख) भट्टिदारिए! इअह्मि ।

**कुरङ्गी** — (ग) हळा! णं सीदळं दे सरीरं ।

**नलिनिका** — (घ) भट्टिदारिए! ण आणामि ।

**कुरङ्गी** — (ङ) हळा! एहि परिस्सजेहि मं ।

**नलिनिका** — (च) भट्टिदारिए! तह । (परिष्वजते)

**कुरङ्गी** — (छ) हळा! अदिसीदळं मणोहरं च दे सरीरं ।

**नलिनिका** — (ज) अणुग्गहीदह्मि ।

**कुरङ्गी**[1] — (झ) हळा! सम्पदि णस्सदि विअ मे सरीरदाहो ।

---

(क) हला! एहि तावत् ।

(ख) भर्तृदारिके! इयमस्मि ।

(ग) हला! ननु शीतलं ते शरीरम् ।

(घ) भर्तृदारिके! न जानामि ।

(ङ) हला! एहि परिष्वजस्व माम् ।

(च) भर्तृदारिके! तथा ।

(छ) हला! अतिशीतलं मनोहरं च ते शरीरम् ।

(ज) अनुगृहीतास्मि ।

(झ) हला! सम्प्रति नश्यतीव मे शरीरदाहः । हन्त कृतः सखीप्रणयः । समाप्त-

---

१. 'ङ्गी—स्वग' क. पाठः.

(स्वगतम्) हन्त किदो सहिप्पणओ । समत्तो अ अज्ज एदाए सरीरसंसग्गो । (प्रकाशम्) गच्छ दाणि तुवं ।

**नलिनिका** — (क) जं भट्टिदारिआ आणवेदि । (निष्क्रान्ता)

**हरिणिका** — (ख) भट्टिदारिए! भट्टिणीए किं णिवेदेमि[1] ।

**कुरङ्गी** — (ग) अज्ज विअदरोआ सोत्था होदि त्ति ।

**हरिणिका** — (घ) कहं तुए विञ्ञादं त्ति पुच्छिदा किं विण्णवेमि ।

**कुरङ्गी** — (ङ) सुट्ठु तुए विञ्ञादं । एदेण ओसधविसेसेण त्ति भणेहि ।

**हरिणिका** — (च) जं भट्टिदारिआ आणवेदि । (निष्क्रान्ता)

**अविमारकः** — किन्नुखल्वनया व्यवसितम् ।

उष्णं श्वसिति तन्वङ्गी सर्वतः प्रेक्षते मुहुः ।
नेत्राभ्यां बाष्पपूर्णाभ्यां किन्नु कर्तुं व्यवस्थिता ॥ ३ ॥

---

श्चाद्यैतस्याः शरीरसंसर्गः । गच्छेदानीं त्वम् ।

(क) यद् भर्तृदारिकाज्ञापयति ।
(ख) भर्तृदारिके! भट्टिन्यै किं निवेदयामि ।
(ग) अद्य विगतरोगा स्वस्था भवतीति ।
(घ) कथं त्वया विज्ञातमिति पृष्टा किं विज्ञापयामि ।
(ङ) सुष्ठु त्वया विज्ञातम् । एतेनौषधविशेषेणेति भण ।
(च) यद् भर्तृदारिकाज्ञापयति ।

---

१. 'विण्णवेमि' ख. पाठः.

कुरङ्गी[1] — (क) होदु, उत्तरीअवासेण अत्ताणं उब्बन्धिअ वावादइस्सं । (उत्थाय तथा कुर्वती मेघस्तनितं श्रुत्वा) हं परित्ताआहि परित्ताआहि मं ।*

अविमारकः — सखे! न शक्यमतःपरमुपेक्षितुम् । (अङ्गुलीयकं वामाङ्गुल्यां प्रक्षिप्य) कान्ते! न भेतव्यं न भेतव्यम् । (इति कुरङ्गीमुत्थापयति)

कुरङ्गी — (सहर्षम्) (ख) किण्णुखु सच्चं एदं । मूढा विअ जादा ।

अविमारकः — कान्ते! व्यपनीयतां शङ्का । (परिष्वजते)

कुरङ्गी — (ग) अच्छरीअं । एकक्खणेण णस्सदि विअ मे सरीरदाहो ।

अविमारकः — अयं खल्वस्याः परिष्वङ्गः,

सततपरिचितो मनोभियोगा-
दधिकरसः प्रथमात् समागमात् ।
रणशिरसि नृपेण साहसाद्यो†
विजय इवाद्य मयानुभूयते ॥ ४ ॥

---

(क) भवतु, उत्तरीयवाससात्मानमुद्बध्य व्यापादयिष्यामि । हं परित्रायस्व परित्रायस्व माम् ।

(ख) किन्नुखलु सत्यमेतत् । मूढेव जाता ।

(ग) आश्चर्यम् । एकक्षणेन नश्यतीव मे शरीरदाहः ।

---

१. 'ङ्गी—उ' क. पाठः.

---

* इत उत्तरं '(इति पतति)' इत्यपेक्षितं भाति । † 'साहसाप्तः' इति हृद्यतरः पाठो भाति ।

**विदूषकः** — (क) कहं रोदिदुं आरद्धा । अळं अदिमत्तं सन्दावेण । अहव अहं वि रोदामि । एक्कं पि त[1]हिं[2] दुळ्ळहं मम णअणादो बप्फं ण णिग्गच्छइ । जदा मे पिदा उवरदो, तदा वि महन्तेण आरम्भेण रोदिदुं आरद्धो । बप्फं ण णिग्गच्छइ । किं पुण अण्णसन्दावस्स[3] । तह वि अणुस्सुओ रोदामि ।

**अविमारकः**— अलमुत्प्रहसितेन । अच्छलो हि स्नेहो नाम ।

न ते न बुद्धिर्मम दूषणीया
येन प्रकामं भवतास्मि हास्यः ।
प्राज्ञस्य मूर्खस्य च कार्ययोगे
समत्वमभ्येति तनुर्न बुद्धिः ॥ ५ ॥

(प्रविश्य)

**नलिनिका** — (ख) हरिणिए ! हरिणिए ! । कहं दुवारं रुद्धं । हद्धि दुवारणिरोहेण अवअदसन्दावं अत्ताणं करिस्सदि त्ति

---

(क) कथं रोदितुमारब्धा । अलमतिमात्रं सन्तापेन । अथवा अहमपि रोदिमि । एकमपि तत्र दुर्लभं मम नयनाद् बाष्पं न निर्गच्छति । यदा मे पितोपरतस्तदापि महतारम्भेण रोदितुमारब्धः । बाष्पं न निर्गच्छति । किं पुनरन्यसन्तापस्य । तथाप्यनुत्सुको रोदिमि ।

(ख) हरिणिके ! हरिणिके ! । कथं द्वारं रुद्धम् । हा धिग् द्वारनिरोधेनापगतसन्ता-

---

१. 'क' ख. पाठः. २. 'हिं मम दु' क. पाठः. ३. 'स्स । अ' क. पाठः.

तर्केमि । हरिणिए ! हरिणिए ! । हद्धि तं एव्व संवुत्तं ।

**अविमारकः**— नलिनिकाया इव स्वरः । वयस्य ! विघाट्यतां द्वारम् ।

**विदूषकः**—(क) जं भवं आणवेदि । (विघाट्य) एदु एदु भोदी ।

**नलिनिका**—(ख) हं को दाणिं एसो पुरिसो ।

**विदूषकः**—(ग) सुट्ठु विञ्ञादं तुए । अहो राअउळस्स विसेसो । को अण्णो जणो मं पेक्खिअ पुरिसो त्ति भणादि । इत्थिआ खु अहं ।

**अविमारकः**— नलिनिके ! प्रविशेदानीम् ।

**नलिनिका**—(घ) कहं भट्टिदारओ । भट्टिदारअ ! वन्दामि । भट्टिदारअ ! को एसो पुरिसो ।

**विदूषकः**—(ङ) अहं पुक्खरिणी णाम चेडी ।

**अविमारकः**— योऽस्माभिः सदा कथ्यते सन्तुष्ट इति, सोऽयं ब्राह्मणः ।

---

पमात्मानं करिष्यतीति तर्कयामि । हरिणिके ! हरिणिके ! । हा धिग् तदेव संवृत्तम् ।

(क) यद् भवानाज्ञापयति । एत्वेतु भवती ।

(ख) हं क इदानीमेष पुरुषः ।

(ग) सुष्ठु विज्ञातं त्वया । अहो राजकुलस्य विशेषः । कोऽन्यो जनो मां प्रेक्ष्य पुरुष इति भणति । स्त्री खल्वहम् ।

(घ) कथं भर्तृदारकः । भर्तृदारक ! वन्दे । भर्तृदारक ! क एष पुरुषः ।

(ङ) अहं पुष्करिणी नाम चेटी ।

**नलिनिका** — (क) आ दिट्ठपुरुवो णअरापणाळिन्दे अअं बह्मणो ।

**विदूषकः** — (ख) आम भोदि! जण्णोपवीदेण बह्मणो, चीवरेण रत्तपडो । जदि वत्थं अवणेमि, समणओ होमि । भोदि! किं एदं ।

**नलिनिका** — (ग) भट्टिदारिआए उवह्लाणं ।

**विदूषकः** — (घ) किं एदिणा बुभुक्खिदाए रोदन्तीए अत्तहोदीए उवह्लाणेण कय्यं । गच्छ सिग्घं भोअणं आणेहि । अहं अग्गासणी[1]ओ होमि ।

**नलिनिका** — (ङ) दुब्बह्मण! एदं पि भोअणं चिन्तेसि । सव्वं दाव चिट्ठदु । कहं दिअसे अणेअपुरुससम्पादे राअमग्गे भट्टिदारओ पविट्ठो ।

**अविमारकः** — सर्वं भवत्यै सन्तुष्टः कथयिष्यति ।

---

(क) आ दृष्टपूर्वो नगरापणालिन्देऽयं ब्राह्मणः ।

(ख) आम भवति! यज्ञोपवीतेन ब्राह्मणः, चीवरेण रक्तपटः । यदि वस्त्रमपनयामि, श्रमणको भवामि । भवति! किमेतत् ।

(ग) भर्तृदारिकाया उपस्नानम् ।

(घ) किमेतेन बुभुक्षिताया रुदन्त्या अत्रभवत्या उपस्नानेन कार्यम् । गच्छ शीघ्रं भोजनमानय । अहमग्रासनीयो भवामि ।

(ङ) दुर्ब्राह्मण! एतदपि भोजनं चिन्तयासि । सर्वं तावत् तिष्ठतु । कथं दिवसेऽनेकपुरुषसम्पाते राजमार्गे भर्तृदारकः प्रविष्टः ।

---

१. 'णि' ख. पाठः.

**नलिनिका** — (क) विसज्जिदह्मि इमिणा बहुमाणवअणेण । होदु, इमं गह्णिअ चउस्साळं पविसिअ गोट्ठीजणेण सह वुत्तन्तं सुणामि । एहि बह्मण ! (इत्याकर्षति) ।

**विदूषकः** — (ख) अब्बह्मण्णं अब्बह्मण्णं ।

**कुरङ्गी** — (ग) हस्सो खु अअं बह्मणो ।

**अविमारकः** — वयस्य ! हास्यः खलु भवान् ।

**विदूषकः** — (घ) को एत्थ मम अस्सद्धेअं भणादि । अहं ण हस्सो, तत्तहोदी एव हस्सा । जा अत्तणो अवत्थं जाणिअ किं पि कत्तुं ववसिअ मेहसद्दं सुणिअ सव्वं विसुमरिअ पडिदा ।

**कुरङ्गी** — (ङ) हं एदं पि इमेहि[1] दिट्ठं ।

**नलिनिका** — (च) याचेमि अहं । इदो एहि बह्मण ! ।

---

(क) विसर्जितास्म्यनेन बहुमानवचनेन । भवतु, इमं गृहीत्वा चतुःशालं प्रविश्य गोष्ठीजनेन सह वृत्तान्तं शृणोमि । एहि ब्राह्मण ! ।

(ख) अब्रह्मण्यमब्रह्मण्यम् ।

(ग) हास्यः खल्वयं ब्राह्मणः ।

(घ) कोऽत्र ममाश्रद्धेयं भणति । अहं न हास्यः, तत्रभवत्येव हास्या । यात्मनोऽवस्थां ज्ञात्वा किमपि कर्तुं व्यवस्य मेघशब्दं श्रुत्वा सर्वं विस्मृत्य पतिता ।

(ङ) हम् एतदप्याभ्यां दृष्टम् ।

(च) याचेऽहम् । इत एहि ब्राह्मण ! ।

---

१. 'हि संदि' ख. पाठः,

**विदूषकः** — (क) जइ भोअणं देसि, तदो गच्छामि अहं। इट्ठं आअन्तुअस्स भोअणदाणं।

**नलिनिका** — (ख) एहि मे सव्वाभरणं देमि।

**विदूषकः** — (ग) णहि घिदवअणेण पित्तं णस्सदि। मम हत्थगदं करेहि।

**नलिनिका** — (घ) एवं होदु। (आभरणान्यवमुच्य ददाति)

**विदूषकः** — (ङ) सुणादु होदी।

**नलिनिका** — (च) मूढ! बह्मण! चउस्साळे उवविसिअ गोट्ठीजणेण सह सुणामि।

**विदूषकः** — (छ) तत्तहोदीं पुच्छिअ आअच्छामि।

**नलिनिका** — (ज) को तुवं, मम सव्वाभरणं गह्निअ वळ्हो जादो। एहि दाव। (विदूषकं हस्ते गृह्णाति)

**विदूषकः** — (झ) भोदि! मा मा एवं। अदिसुउमारो खु अहं।

---

(क) यदि भोजनं ददासि, ततो गच्छाम्यहम्। इष्टमागन्तुकस्य भोजनदानम्।

(ख) एहि मे सर्वाभरणं ददामि।

(ग) नहि घृतवचनेन पित्तं नश्यति। मम हस्तगतं कुरु।

(घ) एवं भवतु।

(ङ) श्रृणोतु भवती।

(च) मूढ! ब्राह्मण! चतुःशाल उपविश्य गोष्ठीजनेन सह श्रृणोमि।

(छ) तत्रभवतीं पृष्ट्वागच्छामि।

(ज) कस्त्वं, मम सर्वाभरणं गृहीत्वा वल्लभो जातः। एहि तावत्।

(झ) भवति! मा मैवम्। अतिसुकुमारः खल्वहम्।

**नलिनिका** — (क) जाणामि जाणामि दे सुउमारत्तणं। जइ सुउमारो, सिग्घं एहि।

**विदूषकः** — (ख) भोदि! अअं आअच्छामि।

( निष्क्रान्तौ )

**अविमारकः** — प्रिये! पश्य पश्य परमदर्शनीयान् प्रावृट्-कालवल्लभान् कालमेघान्। इमे हि,

जलदसमयघोषणाडम्बरानेकरूपक्रिया-
†जम्भका वज्रभृद्दृष्टयो
भगुणयवनिकास्तटित्पन्नगीवासवल्मीक-
भूता नभोमार्गरूढक्षुपाः।
मदनशरनिशानशैलाः प्ररुष्टाङ्गनासन्धि-
पाला गिरिस्नापनाम्भोघटाः
उदधिसलिलभैक्षहारा रवीन्द्वर्गला देवयन्त्र-
प्रपा भान्ति नीलाम्बुदाः ॥ ६ ॥

**कुरङ्गी** — (ग) अय्यउत्त! दस्सणीआ दाणिं संवुत्ता।

**अविमारकः** — अहो विपुलता विरलता धाराणाम्। तथाहि,

---

(क) जानामि जानामि ते सुकुमारत्वम्। यदि सुकुमारः, शीघ्रमेहि।
(ख) भवति! अयमागच्छामि।
(ग) आर्यपुत्र! दर्शनीया इदानीं संवृत्ताः।

---

† 'जम्भको नृत्तगानविद्' इति यादवः।

व्योमार्णवोर्मिसदृशा निनदन्ति मेघा
मेघप्ररोहसदृशाः प्रपतन्ति धाराः ।
रक्षोऽङ्गनाभ्रुकुटिवत् तडितः स्फुरन्ति
प्राप्तोऽग्रयौवनघनस्तनमर्दकालः ॥ ७ ॥

**कुरङ्गी** —(क) अय्यउत्त ! आरद्धो सम्पदि वरिसिदुं देवो।

**अविमारकः**—प्रिये ! एहि अभ्यन्तरमेव प्रविशावः ।

**कुरङ्गी** —(सहर्षम्) (ख) जं अय्यउत्तो आणवेदि ।

(निष्क्रान्तौ)

पञ्चमोऽङ्कः ।

---

(क) आर्यपुत्र ! आरब्धः सम्प्रति वर्षितुं देवः ।
(ख) यद् आर्यपुत्र आज्ञापयति ।

## अथ षष्ठोऽङ्कः।

(ततः प्रविशति धात्री)

**धात्री** —— (क) अहो अणवत्था[1] किदन्तस्स, जं राअदारिआ पैढमं[2] महाराएण सोवीरराएण तं विहूणुसेणं उद्दिसिअ वरिदा। अज्ज[3] अविदिअसम्भवेण माणुसलोअदुल्लभाकिदिगुणविसेसेण केण वि संओओ जादो। अहँअ[4] दाणि कासिराअपुत्तो जअवम्मा णाम भट्टिणीए सुदस्सणाए सह अमच्चेण भूदिएण आणीदो सम्पदि राअउलं पविट्ठो। सअं[5] किल कासिराओ जैण्णवावारेण[6] ण आअदो। किंणुखु एदं भविस्सदि।

(ततः प्रविशति वसुमित्रा)

**वसुमित्रा** —— (ख) अहो विसमसीला संवच्छरिआ णाम अत्तणो णक्खत्तविसेसं एव्व चिन्तअन्ति, कम्मगोरवं ण जा-

---

(क) अहो अनवस्था कृतान्तस्य, यद् राजदारिका प्रथमं महाराजेन सौवीरराजेन तं विष्णुसेनमुद्दिश्य वृता। अद्याविदितसम्भवेन मानुषलोकदुर्लभाकृतिगुणविशेषेण केनापि संयोगो जातः। अथ चेदानीं काशिराजपुत्रो जयवर्मा नाम भट्टिन्या सुदर्शनया सहामात्येन भूतिकेनानीतः संप्रति राजकुलं प्रविष्टः। स्वयं किल काशिराजो यज्ञव्यापारेण नागतः। किन्नुखल्वेतद् भविष्यति।

(ख) अहो विषमशीलाः सांवत्सरिका नामात्मनो नक्षत्रविशेषमेव चिन्तयन्ति,

---

१. 'त्था णं कि' ख. पाठः. २. 'पुढमं' क. पाठः. ३. 'ज्ज विगअसम्भमेण' क. पाठः. ४. 'ह्माअं च दा' क. पाठः. ५. 'अ' ख. पाठः. ६. 'ण आ' ख. पाठः.

णन्ति । अज्ज पविट्ठो कुमारो, अज्ज एव्व विवाहो णिउँत्तो । (परिक्रम्य) किण्णुखु जअदा इअं किं वि चिन्तअन्ती अप्पसण्णा विअ उस्सुआ दीसइ । जअदे! भट्टिणी भणादि—आअच्छेहि त्ति ।

**धात्री**— (क) हळा! जाणासि किं णिमित्तं त्ति ।

**वसुमित्रा**— (ख) किं अण्णं, एदस्सिं कय्ये कत्तव्वं चिन्तेदुं ।

**धात्री**— (ग) सम्पदि भट्टिणीए को अभिप्पाओ ।

**वसुमित्रा**— (घ) अत्तणो वंसजादस्स विह्णुसेणस्स अवत्थं अजाणिअ णेच्छदि जअवम्मणो दारिअं दादुं । किन्तु महाराओ सोवीरराअउत्तं अजाणन्तो अज्ज किळ अहिअसन्दावो जादो ।

---

कर्मगौरवं न जानन्ति । अद्य प्रविष्टः कुमारोऽद्यैव विवाहो नियुक्तः । किंनुखलु जयदेयं किमपि चिन्तयन्त्यप्रसन्नेवोत्सुका दृश्यते । जयदे! भट्टिनी भणति— आगच्छेति ।

(क) हला! जानासि किं निमित्तमिति ।

(ख) किमन्यत्, एतस्मिन् कार्ये कर्तव्यं चिन्तयितुम् ।

(ग) संप्रति भट्टिन्याः कोऽभिप्रायः ।

(घ) आत्मनो वंशजातस्य विष्णुसेनस्यावस्थामज्ञात्वा नेच्छति जयवर्मणे दारिकां दातुम् । किन्तु महाराजः सौवीरराजपुत्रमजानन्नद्य किलाधिकसन्तापो जातः ।

---

१. 'व्वु' ख. पाठः ।

(प्रविश्य)

**नलिनिका** — (क) अज्ज किदसङ्केदा विअ अह्माअं सव्वसङ्कडा । (परिक्रम्यावलोक्य) किण्णुहु एसा मम मादा वसुमित्ताए सह किं वि चिन्तेदि । इमं उपसप्पिअ असुहवुत्तन्तं सुणामि ।

**वसुमित्रा** — (ख) हळा णळिणिए! एहि दाव । तुमं कञ्चुइसहवासेण राअउळवुत्तन्तं जाणासि ।

**नलिनिका** — (ग) अभिणवो वुत्तन्तो । णं तं णिवेदिदुं आअदह्मि ।

**वसुमित्रा** — (घ) भणाहि जादे! ।

**नलिनिका** — (ङ) पेसिदो खु सोवीरराअस्स अमच्चेहि दूदो — अह्माअं सामी तुह्माणं णअरे सपुत्तदारकळत्तो पच्छण्णो पडिवसदि त्ति अह्माअं गूढपुरुसेहि वुत्तन्तो‡ जाणिअदु सामिणेत्ति ।

---

(क) अद्य कृतसंकेतानीवास्माकं सर्वसंकटानि । किंनुखल्वेषा मम माता वसुमित्रया सह किमपि चिन्तयति । इमामुपसर्प्यासुखवृत्तान्तं शृणोमि ।

(ख) हला नलिनिके! एहि तावत् । त्वं कञ्चुकिसहवासेन राजकुलवृत्तान्तं जानासि ।

(ग) अभिनवो वृत्तान्तः । ननु तं निवेदयितुमागतास्मि ।

(घ) भण जाते! ।

(ङ) प्रेषितः खलु सौवीरराजस्यामात्यैर्दूतः—अस्माकं स्वामी युष्माकं नगरे सपुत्रदारकलत्रः प्रच्छन्नः प्रतिवसतीत्यस्माकं गूढपुरुषैर्वृत्तान्तो ज्ञायतां स्वामिनेति ।

---

‡ आणीदो इति शेषः ।

**उभे**—(क) कहं पच्छण्णवेसो वत्तदि त्ति । तदो तदो ।

**नलिनिका**—(ख) तदो एदं सव्वं सुणिअ तस्स ळेहस्स अवसाणं पेक्खिअ अय्यभूदिएण सह गओ किळ महाराओ तं अण्णेसिदुं ।

**धात्री**—(ग) किण्णुखु भवे ।

**वसुमित्रा**—(घ) णळिणिए! तुवं दाव अब्भन्तरं पविस।

**नलिनिका**—(ङ) जं अय्या [1]भणादि । (निष्क्रान्ता)

**वसुमित्रा**—(च) एहि दाव । वअं भट्टिणीं पेक्खामो ।

**धात्री**—(छ) एवं करेह्म ।

(निष्क्रान्ते)

प्रवेशकः ।

---

(क) कथं प्रच्छन्नवेषो वर्तत इति । ततस्ततः ।

(ख) तत एतत् सर्वं श्रुत्वा तस्य लेखस्यावसानं प्रेक्ष्यार्यभूतिकेन सह गतः किल महाराजस्तमन्वेषितुम् ।

(ग) किन्नुखलु भवेत् ।

(घ) नलिनिके! त्वं तावदभ्यन्तरं प्रविश ।

(ङ) यदार्या भणति ।

(च) एहि तावत् । आवां भट्टिनीं पश्यावः ।

(छ) एवं कुर्वः ।

---

१. 'आणवेदि' क. पाठः.

(ततः प्रविशति कुन्तिभोजः सौवीरराजभूतिकाभ्याम्)

**कुन्तिभोजः**— वयस्य!

किं प्रेक्षसे मम मुखं चिरकालदृष्टो
गाढं परिष्वज सखे! स्मर बालभावम्।
प्रीत्या भवन्तमनिमेषमवेक्षितुं मे
स्नेहान्नवीकृत इवाद्य वयस्यभावः ॥ १ ॥

**सौवीरराजः**— यदिष्टं भवतः[1]।

(उभौ परिष्वजेते)

**कुन्तिभोजः**—

चिन्ताकुलत्वं व्रजतीव बुद्धि-
र्वाक्यं च बाष्पाहतगद्गदं च।
नेत्रे सबाष्पे मुखमप्रसन्नं
किं हर्षकाले क्रियते विकारः ॥ २ ॥

**सौवीरराजः**— न खल्वहमप्रहृष्टो भवत्सङ्गमेन। किन्तु बलवान् पुत्रस्नेहो नाम।

यो मे पुत्रगतः शोको हृदयस्थो विजृम्भते।
सोऽद्य लब्ध्वा †सहायं त्वां बाष्परूपेण निर्गतः ॥ ३ ॥

**कुन्तिभोजः**— कथं पुत्रगतः शोक इति।

**भूतिकः**— विदितमस्तु स्वामिना। न दृश्यते किलास्मिन् संवत्सरे कुमारः।

---

१. 'ता। (परिष्वजते)' ख. पाठः.

---

† 'सहायं' इत्यस्य स्थाने 'सखायं' इति वा पाठो भवेत्।

**सौवीरराजः** — बलवान् पुत्रस्नेहो नाम । पश्यतु भवान्

अनुपमबलवीर्यरूपवन्तं
सुतमविमारकमद्य चिन्तयामि ।
तव चरणरजोऽञ्चिताग्रकेशो
यदि स भवेदिह को नु मद्विशिष्टः ॥ ४ ॥

**भूतिकः** — (आत्मगतम्) महान् खल्वयं सन्तापो वर्धत एव हि कुमारमन्तरेण । विलोपयास्येनम् । (प्रकाशम्) कथं स्वामिनोऽभ्यागता व्यापत् ।

**कुन्तिभोजः** — अहमप्यनेन व्याक्षेपेण विस्मृतवानेतत् प्रष्टुम् ।

**[1]सौवीरराजः** — श्रूयताम् । अथवा भूतिकस्तु विजानाति[2] । अप्यस्मन्मुखाच्छ्रोतुमिच्छति[3] ।

**कुन्तिभोजः** — वयमवहिताः स्मः ।

**सौवीरराजः** — अपि ज्ञायते चण्डभार्गवो नामात्यन्तरोषी ब्रह्मर्षिः ।

**कुन्तिभोजः** — श्रूयते तत्रभवांस्तपोनिधिः ।

**सौवीरराजः** — सोऽस्मद्विषयमभ्यागतः । कान्तारे तस्य शिष्यो व्याघ्रेणाभिभूय मारितः[4] ।

**कुन्तिभोजः** — ततस्ततः ।

---

१. 'सोऽपि श्रू' क. पाठः. २. 'नन्वप्य' ख पाठः. ३. 'ति । वयमवहिताः स्मः । सौ' क. पाठः. ४. 'तस्तमुपागतः । कु' क. पाठः.

**सौवीरराजः**—ततोऽहमपि तस्मिन् काले मृगयावशाद् यदृच्छयैव तं देशमभ्युपगतः ।

**कुन्तिभोजः**—ततस्ततः ।

**सौवीरराजः**—अथ मां दृष्ट्वा विजृम्भमाणरोषभ्रुकुटीपुटविषमीकृतवदनः प्रलम्बजटाभारः शिष्ये[1] स न्यस्तकरः क्रुद्धो दहन्निव क्रोधाग्निना मद्वचनमश्रोतुकामः संरम्भस्खलितवचनो मां बहुधा क्षेप्तुमारब्धः ।

**कुन्तिभोजः**—ततस्ततः ।

**सौवीरराजः**—ततोऽहमपि भवितव्यस्यार्थस्य प्राबल्येनाधृतिः 'वृत्तान्तं न ब्रवीषि, निष्कारणं[2] क्षिपसि' इति संक्रुद्धवानस्मि ।

न भाषसे वृत्तमुपैषि रोषं
निष्कारणं प्रक्षिपसि प्रकामम् ।
अभाजनं त्वं तपसां प्रकोपाद्
ब्रह्मर्षिरूपेण भवाञ्छ्वपाकः ॥ ५ ॥

**कुन्तिभोजः**—असदृशमुक्तं भवता ।

**सौवीरराजः**—ततस्तच्छ्रुत्वैवाज्यधारावसिक्तो भगवान् हुताशन इव प्रज्वलितनेत्रो बहुशः शिरः कम्पयन्[3] 'कथं कथम्' इत्युक्त्वा मां शप्तुमारब्धवान्[4] ।

---

१. 'शिताह' क. पाठः. २. 'णं प्रक्षि' क. पाठः. ३. 'न् श' ख. पाठः. ४. 'ब्धः ।' ख. पाठः.

यस्माद् ब्रह्मर्षिमुख्योऽहं श्वपाक इति भाषितः ।
तस्मात् सपुत्रदारस्त्वं श्वपाकत्वमवाप्स्यसि ॥ ६ ॥

इति ।

**कुन्तिभोजः**—अहो अल्पमूलत्वं महतां चानर्थस्य ।

**भूतिकः**—सभाग्यं सौवीरराजकुलम् । कुतः[1],

ब्रह्मर्षिणा प्ररुष्टेन श्वपाकत्वं तदा कृतम् ।
यस्मात् तेनैव रूपेण न सर्वं भस्मसात् कृतम् ॥ ७ ॥

**कुन्तिभोजः**—युक्तमभिहितं भवता । ततस्ततः ।

**सौवीरराजः**—ततस्तच्छापप्रक्षुब्धमनसा मया सुचि[2]रमनुनीयमानः शनैः शनैः प्रकृतिस्थो भूत्वानुग्रहं कृतवान्—

यावत् प्रच्छन्नरूपेण तावत् संवत्सरं व्रजे(त् ? :) ।
ततः संवत्सरे पूर्णे मुक्तशापो भविष्यसि ॥ ८ ॥

इति । एवमुक्त्वा प्रसन्नचित्तेन एहि भोः काश्यप! इत्याहू[3]यत, स तमनुगतो[4] व्याघ्रेण मारितो वटुः । चरितं च मया संवत्सरं श्वपाकव्रतम् । अद्यास्मि शापान्मुक्तः ।

**कुन्तिभोजः**—अहो व्यापदः[5] प्रवृत्तिर्निवृत्तिश्च । दिष्ट्या भवान् वर्धते[6] ।

**भूतिकः**—जयतु स्वामी ।

**कुन्तिभोजः**—ननु विष्णुसेनमाता सपरिवार[7]मन्तःपुरं प्रविष्टा ।

---

१. 'त' ख. पाठः. २. 'क' क. पाठः. ३. 'त्युक्त्वान्तमुपागते वटुः पूर्वं व्या' क. पाठः. ४. 'तः । च' क. पाठः. ५. 'दां' ख. पाठः. ६. 'ते । ननु' ख. पाठः. ७. 'रान्तः' ख. पाठः.

भूतिकः — तत्रभवती प्रविश्याभ्यन्तरं चिरकालप्रसुप्तं प्रणयमुद्बोधयति ।

कुन्तिभोजः — अथेदानीं विष्णुसेनः कथमविमारको जातः ।

भूतिकः — श्रृणोतु स्वामी — अस्ति धूमकेतुर्नामासुरः । सर्वलोकमारणाय परिभ्रमन् स कदाचित् सौवीरराष्ट्रमुत्सादयितुं प्रवृत्तः ।

कुन्तिभोजः — अपूर्वा खलु कथा । ततस्ततः ।

भूतिकः — ततः स्वदेशे[1] सर्वप्रजानामार्तिं दृष्ट्वा तस्य राक्षसस्य[2] च प्रतिक्रियामनवेक्षमाणः स्वामी क्लेशमुपगतः ।

कुन्तिभोजः — ततस्ततः ।

भूतिकः — ततस्तत्[3] सर्वं बुद्ध्वा कुमारो विष्णुसेनः क्षितिरेणुपरुषगात्रः प्रलम्बमानकाकपक्षः शिशुभिस्तुल्यवयोभिः †प्रक्रीडमानो दैवयोगात् प्रमत्तेषु रक्षिपुरुषेषु सहसैव तं देशमभ्युपगतो यत्रासौ राक्षसः ।

कुन्तिभोजः[4] — अहो आश्चर्यमाश्चर्यम् । ततस्ततः ।

भूतिकः — ततः[5] स राक्षसः प्रीत्या सुसम्पन्नमिवाहारं कुमारमभिसमीक्ष्य स्वकर्म कर्तुमारब्धः ।

---

१. 'शस' क. पाठः २. 'स्य प्र' क. पाठः. ३. 'स्तद् बु' ख. पाठः. ४. 'जः — त' ख. पाठः. ५. 'अथ स' ख. पाठः.

---

† प्रकर्षेण क्रीडनशीलः । ताच्छील्ये चानश्.

**कुन्तिभोजः**—अहो नृशंसता राक्षसस्य । ततस्ततः ।

**भूतिकः**—[1]अथ कुमारेण किञ्चित् प्रहस्य,

प्रपतदशनिना यथा गिरीन्द्रो
दवदहनेन यथा वनप्रदेशः ।
युधि ललितमनायुधेन तेन
क्षितिपसुतेन तदा हतः स नीचः ॥ ९ ॥

**कुन्तिभोजः**—प्रथममेव[2] हस्तिसम्भ्रमे मयोक्तं—दैवादुत्पादितोऽयं केवलो[3] मानुषो न भवतीति ।

**सौवीरराजः**—भवान् सहस्रनेत्रश्चरैः कथं चिन्तयत्यविमारकं प्रति ।

**भूतिकः**[4]—स्वामिन् !

गम्यास्तु देशाः सुपरीक्षिता मे
न दृश्यते क्वापि चरैः कुमारः ।
परीक्षितुं तं मनसो[5]ऽस्ति शक्ति-
र्नूनं हि मायामनुगच्छतीति ॥ १० ॥

(ततः प्रविशति नारदः)

**नारदः**—

वेदैः पितामहमहं परितोषयामि
गीतैः करोमि हरिमुद्गतरोमहर्षम् ।

---

१. 'ततः कु' ख. पाठः. २. 'व म' क. पाठः. ३. लो न मानुषोऽयं भ' क. पाठः. ४. 'कः—ग' क. पाठः. ५. 'सा' ख. पाठः.

उत्पादयाम्यहरहर्विविधैरुपायै-
स्तन्त्रीषु च स्वरगणान् कलहांश्च लोके ॥ ११ ॥

भोः! कुन्तिभोजस्य पित्रा दुर्योधनेन वयं सुचिरमाराधिताः । तस्मिन् मानुषस्वभावमुपगते कुन्तिभोजश्चास्मासु भृत्यत्वमाचरति । अद्य कुन्तिभोजस्य सौवीरराजस्य च महानविमारकादर्शनेन कार्यसङ्कटो वर्तते । तदिदानीमहमविमारकप्रदर्शनेन तयोर्व्याक्षेपं [1]समाक्षिपामीत्यवतीर्णोऽस्मि भूम्याम् । (इति कुन्तिभोजसौवीरराजयोः पुरतः स्थितः)

**कुन्तिभोजः**— अ[2]ये भगवान् देवर्षिर्नारदः । भगवन्! अभिवादये।

**नारदः**—स्वस्ति भवते ।

**कुन्तिभोजः**— अनुगृहीतोऽस्मि ।

**सौवीरराजः**— भगवन्! अभिवादये।

**नारदः**— शान्तिरस्तु ते ।

**सौवीरराजः**— अनुगृहीतोऽस्मि ।

**कुन्तिभोजः**— (कर्णे) भूतिक! एवं क्रियताम् ।

**भूतिकः**—यदाज्ञापयति स्वामी। [3](निष्क्रम्य प्रविश्य) इदमर्घ्यं पाद्यं च ।

**कुन्तिभोजः**— भगवन्! क्रियतामनुग्रहः ।

**नारदः**—एवमस्तु ।

---

१. 'संक्षि' ख. पाठः. २. 'ये दे' क. पाठः. ३. 'इति परिक्रम्य' ख. पाठः.

**कुन्तिभोजः**—(अभ्यर्च्य) भगवन्! अस्मद्गृहं परिपूतं भवदवतरणेन।

**सौवीरराजः**—इदानीं मुक्तशापोऽस्मि देवर्षिदर्शनेन।

**नारदः**—नाहं साम्प्रतं युष्मद्दर्शनार्थमेवागतोऽत्र[1]। अविमारकादर्शनेन[2] सम्भूतं दुःखं भवतोर्ज्ञात्वावतीर्णोऽस्मि।

**उभौ**—यद्येवं, विमुक्तसन्तापौ स्वः।

**नारदः**—भूतिक! सुदर्शनामानय।

**भूतिकः**—यदाज्ञापयति भगवान्। (निष्क्रम्य सुदर्शनया सार्धं प्रविष्टः)

**सुदर्शना**—(क) अब्भाअदो देवरिसी।

**भूतिकः**—एवम्।

**सुदर्शना**—(ख) सणाहो दाणि मे पुत्तअस्स विवाहो संवुत्तो। (उपगम्य) भअवं वन्दामि।

**नारदः**—

एवमेव महाभागे! नित्यं प्रीतिमवाप्नुहि।
कुन्तिभोजश्च भूपालो नित्यं स्यात् प्रीतिपीडितः॥ १२॥

---

(क) अभ्यागतो देवर्षिः।

(ख) सनाथ इदानीं मे पुत्रकस्य विवाहः संवृत्तः। भगवन्! वन्दे।

---

१. 'वात्रागतः। अ' ख. पाठः. २. 'नस' ख. पाठः.

सुदर्शना[1]—(क) अणुग्गहीदह्मि ।

नारदः—इदानीं पृच्छतां भवन्तौ प्रष्टव्यम् ।

उभौ—अनुगृहीतौ स्वः ।

कुन्तिभोजः—भगवन्! किं जीवति सौवीरराजपुत्रः ।

नारदः—बाढम् ।

सौवीरराजः—केन कारणेन न दृश्यते ।

नारदः—विवाहव्या[2]क्षेपात् ।

सौवीरराजः—कथं निर्विष्टः कुमारः ।

कुन्तिभोजः—अथ कस्मिन् प्रदेशे ।

नारदः—नगरे वैरन्त्ये ।

कुन्तिभोजः—वैरन्त्यं नाम नगरमप्यस्तीति । भवतु कस्य जामातृत्वमुपगतः ।

नारदः—कुन्तिभोजस्य ।

कुन्तिभोजः—कः सः ।

नारदः—

पिता कुरङ्ग्या भूपालो वैरन्त्यनगरेश्वरः ।
दुर्योधनस्य तनयः कुन्तिभोजो भवान् ननु ॥ १३ ॥

(क) अनुगृहीतास्मि ।

१. 'ना--एवं अ' क. पाठः. २. 'श्या' ख. पाठः.

**कुन्तिभोजः**—किं बहुभिः प्रश्नैः । मत्सुतायां कुरङ्ग्यां निविष्ट इत्युच्यते भगवता ।

**नारदः**—एवमेतत् ।

**कुन्तिभोजः**—लज्जित इवास्मि[1] । केन दत्ता, कथं वा, कथं चायं प्रविष्टः कन्यापुरम् ।

**नारदः**—

दत्ता सा विधिना पूर्वं दृष्टा सा गजसम्भ्रमे ।
पूर्वं पौरुषमाश्रित्य[2] प्रविष्टो मायया पुनः ॥ १४ ॥

**कुन्तिभोजः**—भवत्वेवं तावन्निष्प्रतिवचनमृषिवचनम् । भगवन्! इदानीं किं प्राप्तकालं कुमारस्य कुरङ्ग्याश्च । विवाहः पूर्वमारब्धव्यः[3] ।

**नारदः**—निष्ठितो विवाहो ननु गान्धर्वः स्वसमय एव । इदानीम् ।

**कुन्तिभोजः**—अग्निसाक्षिकमिच्छामि ।

**नारदः**—नित्यमग्निसाक्ष्येव[4] । तथापि स्वजनपरितोषणार्थमभ्यन्तरसमयमात्रमुपाध्यायेन कारयित्वा शीघ्रमानीयतामिह कुमारः सह भार्यया ।

**कुन्तिभोजः**—भगवन्! एष गच्छामि ।

**नारदः**—तिष्ठतु भवान् । भूतिक! गच्छ त्वम् ।

---

१. 'स्मिन् ।' ख. पाठः. २. 'मानुष' क. पाठः. ३. 'ब्धः' क. पाठः. ४. 'क्षिकमेव' क. पाठः.

भूतिकः — यदाज्ञापयति भगवान् । (निष्क्रान्तः)

कुन्तिभोजः — भगवन्! विज्ञाप्यमस्ति ।

नारदः — इतस्तावत् । स्वैरमभिधीयताम् ।

कुन्तिभोजः — भगवन्! सुदर्शनायाः पुत्राय जयवर्मणे कुरङ्गीं दास्यामीति मयानीता सा पूर्वं सनाथा । किं कर्तव्यमिदानीम्, अभिधीयताम् ।

नारदः — एवं करोमि । मुहूर्तमेकान्ते तिष्ठ ।

कुन्तिभोजः — तथास्तु । (तथा करोति)

नारदः — सुदर्शने! इतस्तावत् ।

सुदर्शना — (क) भअवं! इअह्मि ।

नारदः — ननु श्रुतमस्मद्वचनम् ।

सुदर्शना — (ख) सुदं सोवीररराअउत्तस्स गुणसङ्कीत्तणं ।

नारदः — मा मैवम्[1] । भवत्या विस्मृतोऽग्निदेवादुत्पन्नोऽग्रजस्ते पुत्रः ।

सुदर्शना[2] — (ग) हं, एदं पि भअवं जाणादि ।

---

(क) भगवन्! इयमस्मि ।

(ख) श्रुतं सौवीरराजपुत्रस्य गुणसङ्कीर्तनम् ।

(ग) हम्, एतदपि भगवान् जानाति ।

---

१. 'वम् । श्रृणु तावद् भ' ख. पाठः. २. 'ना—ए' क. पाठः.

**नारदः**— ममैवाज्ञां कुरुष्व तावत् ।

**सुदर्शना**— (क) एवं करो(दु ? मि) । भअवं[1] भणादु ।

**नारदः**— तवायं पुत्रोऽग्नेरुत्पन्नः । त्वद्भगिन्याः सुचेतनायाः प्रसवसमकाल एव तत्सुतः स्वर्गं गतः । तवायं पुत्रस्त्वद्भगिन्यै त्वया दत्तः । सौवीरराजश्चासावत्यन्तसन्तुष्टः प्रीतिसदृशीः[2] क्रियाः[3] कृत्वा विष्णुसेन इति संज्ञामकरोत् । अमानुषस्वरूपबलवीर्यपराक्रमेणानेन[4] वर्धमानेन यस्मादविरूपधारी मारितोऽसुरः,[5] तस्मादविमारक इति विष्णुसेनं लोको ब्रवीति । ततः सोऽपि ब्रह्मशापपरिभ्रष्टो हस्तिसम्भ्रमदिवसे कुरङ्गीं दृष्ट्वा समुत्थमदनाभिलाषः[6] परेण पौरुषेण सङ्गम्य कुरङ्ग्या दर्शनशङ्कितैः कन्यापुररक्षिभिः परीक्ष्यमाणोऽग्निना भगवता प्रच्छादितो निर्गतः । तेन निर्वेदेनाग्निं प्रविष्टः पित्रा भगवताग्निना[7] प्रीत्या परिष्वज्यमानो न दहत्यग्निरिति मरुत्प्रपातार्थं कञ्चित् पर्वतमारूढः ।

**सुदर्शना**— (ख) अहो अच्चाहिदं ।

**नारदः**— तत्र केनापि विद्याधरेण तद्रूपदर्शनमात्रप्रहृष्टेन

(क) एवं करोमि । भगवान् भणतु ।

(ख) अहो अत्याहितम् ।

१. 'वं । ना' क. पाठः. २. 'शीं' ख. पाठः. ३. 'यां' ख. पाठः. ४. 'न य' क. पाठः. ५. 'तः त' ख. पाठः. ६. 'त्पन्नाभि' ख. पाठः. ७. 'ना पितेव प' क. पाठः.

प्रीत्यान्तर्धानकार्यमात्रमङ्गुलीयकं दत्तं, यद् दक्षिणाङ्गुल्यां[1] धारे[2]यन्नदृश्यो भवति, वामेन प्रकृतिस्थश्च।

**सुदर्शना** — (क) अच्छरीअं[3] अच्छरीअं।

**नारदः** — ततस्तद् दक्षिणाङ्गुल्या धारयन् सन्तुष्टनामधेयेन ब्राह्मणेन सह कुन्तिभोजस्य कन्यापुरं स्वगृहवत् प्रविश्य कुरङ्ग्या यथेष्टमभिरममाणः सुखमास्ते[4]। एष वृत्तान्तः। किमिदानीं कर्तव्यम्।

**सुदर्शना** — (ख) अणन्तरं अय्याए वञ्चिदाए चळदी[5] विअ मे हिअअं, कोदूहळेण तुस्सदि। भअवं! एसु दिअसेसु कुरङ्गी जअवम्मणो भय्यत्ति पुच्छदि। अज्जप्पहुदि तस्स वन्दणीआ संवुत्ता।

**नारदः** — अभिजनयुक्तमेवाभिहितं भवत्या। कथमिदानीं ज्येष्ठपत्नी कनीयसे दीयते। सुदर्शने! अभिधीयतां काशिराजाय जयवर्मणः कुरङ्गी वयसाधिकेति। नन्वस्ति कुरङ्ग्याः कनीयसी सुमित्रा नाम। सा जयवर्मणो भार्या भविष्यति।

---

(क) आश्चर्यमाश्चर्यम्।

(ख) अनन्तरमार्यया वञ्चितया चलतीव मे हृदयं, कौतूहलेन तुष्यति। भगवन्! एषु दिवसेषु कुरङ्गी जयवर्मणो भार्येति पृच्छ्यते। अद्यप्रभृति तस्य वन्दनीया संवृत्ता।

---

१. 'ल्यां' क. पाठः. २. 'र्यमाणमदृ' क. पाठः. ३. 'र्यमच्छर्यं। ना' क. पाठः. ४. 'स्ते। कि' ख. पाठः. ५. 'वळेदी' क. पाठः.

**सुदर्शना**— (क) पडिग्गहिदं इसिवअणं ।

**नारदः**— गच्छ कुन्तिभोजमनुवर्तस्व ।

**सुदर्शना**— (ख) जं भअवं आणवेदि ।

(ततः प्रविशति वरवेषेणाविमारकः कुरङ्गी भूतिकश्च)

**अविमारकः**— भोः ! लज्जित इवास्म्यनेन वृत्तान्तेन ।

दृष्ट्वा तदानीं गजसम्भ्रमे मां
मद्विक्रमं ये परिकीर्तयन्ति ।
ते किन्नु वृत्तान्तमिमं विदित्वा
चारित्रदोषं मयि पातयन्ति ॥ १५ ॥

(परिक्रम्य दृष्ट्वा) अये अयं खलु भगवान् नारदः । य एषः,

शापे प्रसादेषु च सक्तबुद्धि-
र्वेदेषु गीतेषु च रक्तकण्ठः ।
स्निग्धेषु वैरा(ण्यु)पपाद्य यत्ना-
न्नष्टानि कार्याणि *शमीकरोति ॥ १६ ॥

**कुन्तिभोजः**— इत इतः कुमारः । अभिवादयस्वात्मकुल-दैवतं देवर्षिम् ।

---

(क) प्रतिगृहीतमृषिवचनम् ।

(ख) यद् भगवानाज्ञापयति ।

---

* 'समीकरोति' इति स्यात् ।

**अविमारकः**—भगवन्! अभिवादये।

**नारदः**—स्वस्ति भवते सपत्नीकाय*।

**अविमारकः**—अनुगृहीतोऽस्मि। मातुल! अभिवादये।

**कुन्तिभोजः**—एह्येहि वत्स!

क्षमया जय विप्रेन्द्रान् दयया जय संश्रितान्।
तत्त्वबुद्ध्या जयात्मानं तेजसा जय पार्थिवान्॥ १७॥

**अविमारकः**—अनुगृहीतोऽस्मि।

**कुन्तिभोजः**—वत्स! इत इतः पितरमभिवादयस्व।

**अविमारकः**—भोस्तात! अभिवादये।

**सौवीरराजः**—एह्येहि वत्स!

विरचितवरवेषदर्शनीयो
गुरुजनवन्दनमिश्रशुभ्रवक्त्रः।
वयमिव भ(व हर्ष)बाष्पनेत्र-
स्त्वमिह भवत्तनयं समीक्षमाणः॥ १८॥

पुत्र! अभिवादयस्व मातुलम्।

**अविमारकः**—मातुल! अभिवादये।

**कुन्तिभोजः**—एह्येहि वत्स!

यज्ञैः शुभैर्हरिसमो भव नित्ययुक्तैः
सत्यैर्दृढैर्दशरथप्रतिमो भव त्वम्।

---

* 'प्रकृत्याशिषि' (६. ३. ८३) इति विध्यनुसरणे तु 'सहपत्नीकाय' इति प्रयोज्यम्।

*इत्येपिते(?) पितृसमो भव सम्प्रदानैः
स्वेनात्मना सुसदृशेन पराक्रमेण ॥ १९ ॥

**सौवीरराजः**—पुत्र ! सुदर्शनामभिवादयस्व ।

**कुन्तिभोजः**—अयुक्तमिव सुचेतनामनभिवाद्य सुदर्शनाम-भिवादयितुम् ।

**नारदः**—अस्ति कारणम् । अभिवाद्यतां सुदर्शना ।

**उभौ**—एवं क्रियताम् ।

**अविमारकः**—भवति ! अभिवादये ।

**सुदर्शना**—(क) पुत्र ! चिरं जीव एदाए सह । (परिष्वज्य) चिरेण दिट्ठो सि । अज्ज मए अणुभूदो पुत्तसम्पत्तिरसो । (रोदिति)

**कुन्तिभोजः**—

इमां तु बाष्पार्द्रकुतूहलाक्षीं
सम्प्रस्रवद्दुग्धपयोदयुग्माम् ।
अवेक्षितां मातरमप्रकाश्य
धात्रीत्वमेवैति सुचेतना मे ॥ २० ॥

**नारदः**—अलमतिस्नेहेन । प्रविशतु कन्यापुरं सुचेतना सुचेतना सुदर्शना सुदर्शना च सभार्येण पुत्रेण ।

---

(क) पुत्र! चिरं जीवैतया सह । चिरेण दृष्टोऽसि । अद्य मयानुभूतः पुत्रसंप-त्तिरसः ।

---

* 'नित्यार्पितैः पितृसमः' इति पठनीयं भाति ।

**कुन्तिभोजः**—यदाज्ञापयति भगवान् ।

**सुदर्शना**—(क) जं भअवं आणवेदि ।

**नारदः**—अचिरेण सौवीरराजो विसृज्यतां स्वदेशगमनाय। जयवर्मणे सुमित्रा प्रदीयतां काशिराज्ञे* । त्वमपि सन्निहितो भव ।

**कुन्तिभोजः**—अनुगृहीतोऽस्मि ।

**नारदः**—कुन्तिभोज! किमन्यत् ते प्रियमुपहरामि ।

**कुन्तिभोजः**—भगवान् यदि मे प्रसन्नः, किमतः परमहमिच्छामि ।

गोब्राह्मणानां हितमस्तु नित्यं
सर्वप्रजानां सुखमस्तु लोके ।

**नारदः**—सौवीरराज ! किं ते भूयः प्रियमुपहरामि ।

**सौवीरराजः**—यदि मे भगवान् प्रसन्नः, किमतः परमहमिच्छामि ।

इमामुदीर्णार्णवनीलवस्त्रां
नरेश्वरो नः पृथिवीं प्रशास्तु ॥ २१ ॥

---

(क) यद् भगवानाज्ञापयति ।

---

* 'काशिराज्ञे' इति मन्ये लेखकस्यैव दोषः। 'काशिराजाय' इत्येव तु पाठः स्यात् । एवंविधे विषये समासान्तविध्यनित्यत्वकल्पना पुनरव्युत्पन्नलेखकापराधमार्जनैकफला महाकविप्रयोगेषु न शोभते ।

(भरतवाक्यम्)

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २२ ॥

(निष्क्रान्ताः सर्वे)

षष्ठोऽङ्कः ।

अविमारकस्य षष्ठोऽङ्कः । एषोऽवसितश्च[*] ।

---

शुभं भूयात् ।

---

* अविमारकः नाटकम्, उपचारात् । मत्वर्थीयप्रत्ययान्तत्वे तु नपुंसकलिङ्गमपि भवति 'अविमारकम्' इति.

# कथावस्तुसंक्षेपः ।

दीर्घतपसो नाम ब्रह्मर्षेः शापेन वर्षैकभोग्येन सकुटुम्बं श्वपाकतामवाप्य कुन्तिभोजनगरे प्रच्छन्नं निवसतः सौवीरराजस्यात्मजो विष्णुसेनोऽविनाम्नोऽसुरस्य मारणादविमारक इति लब्धापरनामा स्वमातुलस्य कुन्तिभोजस्य दुहितरं कुरङ्गी-मुद्यानगतामञ्जनगिरिसंज्ञस्य मदगजस्य व्याकोपात् परित्रातवान् । तच्च लोको-त्तरमस्यात्युदारं कर्म शृण्वतः कुन्तिभोजस्यैतस्मिन्नसाधारणो बहुमान आसीद्, येन तस्मै कुरङ्गयपि दत्तैव भवेद्, यदि तस्मिन्नन्त्यजत्वशङ्का नाङ्कुशः स्यात् । तयोश्च कुरङ्गयविमारकयोः परस्परदर्शनेनाङ्कुरितोऽनुरागः क्रमेण परां कोटिं प्रतिपन्नः । अथ कुरङ्गीधात्र्या घटनया स कदाचिद् रात्रौ गूढं कुरङ्गया अन्तः-पुरं प्रविश्य तत्र मदनेन चारित्रभ्रंशभयेन च व्याकुलितां कुरङ्गीं ललितसरसमु-पच्छन्दयन् रमयामास । ततः कुरङ्गयाः प्रच्छन्नपुरुषसंप्रयोगशङ्किषु परीक्षणो-द्यतेषु कन्यापुररक्षिषु, अविदित एव कन्यापुरादविमारको निर्गत्य कुरङ्गीपुनस्स-ङ्गमे निराशोऽग्निप्रसादलब्धजन्मत्वादात्मनोऽग्निपतनेऽप्यविकलतामभिवीक्ष्य भृगु-पतनाय कञ्चित् पर्वतमारुरोह । तत्र यदृच्छया प्रियतमया सह विश्रमितुमव-तीर्णः कश्चिद् विद्याधरोऽस्य वृत्तं संकल्पं च प्रणिधानेन परिज्ञाय कृपाविष्ट उदर्कशुभहेतुना केनाप्यङ्गुलीयकेन तं योजयामास, यद् दक्षिणाङ्गुलौ धृतं धर्तारं, तत्स्पृष्टं, तत्स्पृष्टस्पृष्टं चादृश्यान् करोति । ततस्तद् दक्षिणाङ्गुल्या स धारयन् संतुष्टनाम्ना स्ववयस्येन विदूषकेण सह कुरङ्गया अन्तःपुरमविशङ्कं प्रविश्य तत्र तया सह स्वैरं चिरं रेमे । कुन्तिभोजस्तु चिरं जामातृतयाभीप्सितस्याविमार-कस्याकस्मिकेनादर्शनेन तथा व्याकुलो बभूव, यथा भागिनेयान्तरं काशिराजा-त्मजं जयवर्माणं कुरङ्गया वरणीयं मेने । अथ स कालेन सौवीरराजं स्वराज-धान्यामेव गूढं निवसन्तमन्विष्योपलभ्य यावत् तद्वृत्तान्तं तस्मादेव शृणोति, तावत् तत्रागतान्नारदादविमारकस्यापि वृत्तं सर्वमवबुध्यते स्म । सुदर्शना च काशिराजमहिषी कुन्तिभोजसोदर्यात्मन एव पुत्रं तं प्रसूतमृतपुत्रायै स्वभगिन्यै सौवीरराजमहिष्यै सुचेतनायै प्रसूतिकाल एवात्मना समर्पितं नारदोद्बोधनात् सस्मार । अथ नारदः कुरङ्गयविमारकावन्तःपुरादानाय्य कुन्तिभोज-सौवीर-राजादिसहित आशीर्भिरभिननन्द ॥

---

# श्लोकानुक्रमणी ।

---

# Ready for sale.

| | | |
|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 0 |

---

## Trivandrum Sanskrit Series.

| | | |
|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 0 |
| No. 2 — अभिनवकौस्तुभमाला - दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 0 |
| No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 0 |
| No. 4 — शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 0 |
| No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 0 |
| No. 6 — दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 0 |
| No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra sarasvatî. | 2 | 4 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 0 |
| No. 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 0 |
| No. 10 — मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 0 |
| No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 0 |
| No. 14 — नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 0 |
| No. 15 — स्वप्नवासव[illegible] (Nâtaka) by Bhâsa. | 2 | 8 0 |
| No. 16 — प्रति[illegible]यौगन्धरायणम् (Do.) Do. | 1 | 8 0 |
| No. 17 — प[illegible]म् (Do.) Do. | 1 | 0 0 |
| No. 18 — नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Varyar. | 4 | 0 0 |
| No. 19 — मानमेयोदयः (Mîmâmsâ) by Narayana Bhatta and Narayana Pandita. | 1 | 4 0 |
| No. 20 — अविमारकम् (Nataka) by Bhasa. | 1 | 8 0 |

